N.A.
Shiva mahapuran : kailash samhitā with tika
शिवमहापुराण: कैलाश संहिता टीका सहित
Samskrit
Paper - Printed
1806 Sakabda (134 years old)
48 Folio
14.7" x 8.4"
Complete

श्रीगणेशायनमः ॥ अथकैलाससंहितायाउत्तरभागस्यारंभः ॥ त्रयीमयायत्रिगुणात्मकायत्रिलोचनायत्रिपुरांतकाय ॥ ब्रह्माच्युतेशानविभूतिकायनमोस्तुते ऽजप्रणवात्मकाय ॥ १ ॥ प्रपद्येदेवमीशानंसर्वज्ञमपराजितम् ॥ संभवंसर्वभूतानामनादिंविश्वतोमुखं ॥ २ ॥ वाराणस्यांमुनिवरान्सूतोव्यासोक्तमब्रवीत् ॥ प्रणवार्थंशैवतत्वंप्रथमेतदुपक्रमः ॥ ३ ॥ तत्रादौभगवान्वेदव्यासोमंगलमाचरन्शिष्यशिक्षार्थंनिबध्नाति ॥ नमइति ॥ शिवायमंगलप्रदायविशुद्धिस्वरूपायेतिवा ॥ सांबायअंबाजगन्माताआदिमायाशक्तिस्तत्सहितायसगणायपारिषदसहितायससूनवेगजाननस्कंदयुताय ॥ प्रधानपुरुषेशायप्रधानंप्रकृतिःपुरुषो

श्रीगणेशायनमः ॥ अथकैलाससंहितायाउत्तरभागस्यप्रारंभः ॥ नमःशिवायसांबायसगणायससूनवे ॥ प्रधानपुरुषेशायसर्गस्थित्यंतहेतवे ॥ १ ॥ हिमवच्छिखरेपूर्वंतपस्यंतोमहौजसः ॥ वाराणसींगंतुकामामुनयःकृतसंविदः ॥ २ ॥ निर्गत्यतस्मात्संप्राप्यगिरेःकाशींसमाहिताः ॥ स्नातव्यमेवेतितदाददृशुर्मणिकर्णिकाम् ॥ ३ ॥ तत्रस्नात्वासुसंतर्प्यदेवादीनथजान्हवीम् ॥ दृष्ट्वास्नात्वामुनींद्रास्तेविश्वेशंत्रिदशेश्वरम् ॥ ४ ॥ नमस्कृत्याथसंपूज्यभक्त्यापरमयान्विताः ॥ शतरुद्रादिभिःस्तुत्वास्तुतिभिर्वेदपारगाः ॥ ५ ॥ आत्मानंमेनिरेसर्वेकृतार्थावयमित्युत ॥ तस्मिन्नवसरेसूतंपंचक्रोशदिदृक्षया ॥ ६ ॥ गत्वासमागतंवीक्ष्यमुदातेतंववंदिरे ॥ सोपिविश्वेश्वरंसाक्षाद्देवदेवमुमापतिम् ॥ ७ ॥ नमस्कृत्वाथतैःसाकंमुक्तिमंडपमाविशत् ॥ तत्रासीनंमहात्मानंसूतंपौराणिकोत्तमं ॥ ८ ॥ अर्घ्यादिभिस्तदासर्वेमुनयःसमुपाचरन् ॥ अतःसूतःप्रसन्नात्मामुनीनालोक्यसुव्रतान् ॥ ९ ॥ ॥ ॥

नारायणस्तयोरीशाययद्वाप्रधानपुरुषाब्रह्मादयस्तेषामीशाय ॥ अतएवसर्गस्थित्यंतहेतवेसृष्ट्युत्पत्तिलयकारणाय ॥ १ ॥ एवंमंगलंविधायकथांप्रस्तौति ॥ हिमवदिति ॥ कृतसंविदःगमनेकृतप्रतिज्ञाः ॥ २ ॥ निर्गत्येति ॥ तस्माद्धिमवतोगिरेर्निर्गत्यकाशींसंप्राप्यस्नातव्यमेवेतिबुद्ध्यासमाहितामणिकर्णिकांददृशुरित्यन्वयः ॥ ३ ॥ ४ ॥ शतरुद्रादिभिःरुद्राध्यायादिभिः ॥ ५ ॥ ६ ॥ गत्वेति ॥ पंचक्रोशदिदृक्षयासमागतंसूतंगत्वावीक्ष्यववंदिरइत्यन्वयः ॥ सोपिसूतोपि ॥ ७ ॥ नमस्कृत्वेति ॥ ल्यबभावआर्षःसविसर्गपाठोवा ॥ तैःमुनींद्रैः ॥ ८ ॥ समुपाचरन्समपूजयन् ॥ ९ ॥ ॥

तेपिमुनयोपि ॥ १० ॥ प्रस्तावकंप्रकृष्टस्तुतिमयं ॥ ११ ॥ १२ ॥ विद्यायात्वद्दिसंस्थानमेवद्रढयंति ॥ पुराणानीति ॥ वेदार्थमिति ॥ वेदाःप्रतिष्ठिता देविपुराणैर्नात्रसंशयइतिनारदीयेपि ॥ १३ ॥ धिष्ण्यंद्वत्पुंडरीकरूपंगृहं ॥ त्वयिनित्यमितिकचित्पाठः ॥ १४ ॥ त्वन्मुखाब्जादिति ॥ त्वन्मुखाब्जप



पप्रच्छकुशलंतेपिप्रोचुःकुशलमात्मनः ॥ तेसुसंतुष्टत्वद्दयंज्ञात्वासर्वेमुनीश्वराः ॥ १० ॥ प्रणवार्थावगत्यर्थमूचुःप्र
स्तावकंवचः ॥ मुनयऊचुः ॥ व्यासशिष्यमहाभागसूतपौराणिकोत्तम ॥ ११ ॥ भवंतमेवभगवान्व्यासःसर्वजग
द्गुरुः ॥ अभिषिच्यपुराणानांगुरुत्वेसमयोजयत् ॥ १२ ॥ तस्मात्पौराणिकीविद्याभवतोत्वद्दिसंस्थिता ॥ पुराणा
निचसर्वाणिवेदार्थंप्रवदंतिहि ॥ १३ ॥ वेदाःप्रणवसंभूताःप्रणवार्थोमहेश्वरः ॥ अतोमहेश्वरस्थानंत्वयिधिष्ण्यंप्र
तिष्ठितम् ॥ १४ ॥ त्वन्मुखाब्जात्परिस्यंदन्मकरंदमनोहरम् ॥ अपूर्वार्थामृतंपीत्वाभविष्यामोगतज्वराः ॥ १५ ॥
विशेषतोगुरुस्त्वंहिनान्योस्माकंमहामते ॥ इतितेषांवचःश्रुत्वासूतोव्यासतपःफलम् ॥ १६ ॥ गणेशंषण्मुखंसाक्षा
न्महेशानींमहेश्वरम् ॥ शिलादतनयंदेवंनंदीशंसुयशापतिम् ॥ १७ ॥ सनत्कुमारंव्यासंचप्रणिपत्येदमब्रवीत् ॥
साधुसाधुमहाभागामुनयःक्षीणकल्मषाः ॥ १८ ॥ मतिर्दृढतराजातादुर्लभासापिदुष्कृताम् ॥ पाराशर्येणगुरुणानै
मिषारण्यवासिनाम् ॥ १९ ॥ मुनीनामुपदिष्टंयद्वक्ष्येहंमुनिपुंगवाः ॥ सावधानाभवंतोयच्छृण्वंतुपरयामुदा ॥ २० ॥
स्वारोचिषेंतरेपूर्वंतपस्यंतोदृढव्रताः ॥ ऋषयोनैमिषारण्येसर्वसिद्धनिषेविते ॥ २१ ॥ दीर्घसत्रंवितन्वंतोरुद्रमध्वर
नायकम् ॥ प्रीणयंतःपरंभावमैश्वरंज्ञातुमिच्छवः ॥ २२ ॥ निवसंतिस्मतेसर्वेव्यासदर्शनकांक्षिणः ॥ तेषांभावंस
मालोक्यभगवान्बादरायणः ॥ २३ ॥ नारायणांशसंभूतःसाक्षात्सर्वजगद्गुरुः ॥ प्रादुर्बभूवसर्वात्मापराशरतपः
फलम् ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥



रिस्यन्दन्निितिपाठांतरं ॥ १५ ॥ तेषांमुनीनां ॥ व्यासतपःफलंव्यासतपसःफलभूतः ॥ १६ ॥ शिलादतनयंशिलादोनाममहर्षिस्तत्तनयमितिनंदीशवि शेषणं ॥ १७ ॥ १८ ॥ पाराशर्येणव्यासेन ॥ १९ ॥ २० ॥ स्वारोचिषेंतरेस्वारोचिषनामकमन्वंतरे ॥ २१ ॥ २२ ॥ तेषांमुनीनांभावमभिप्रायं ॥ २३ ॥ २४ ॥

तंव्यासं ॥ २५ ॥ तस्मैव्यासाय ॥ २६ ॥२७॥ २८ ॥२९॥ ३० ॥ महात्मानंव्यासं ॥३१॥ वेधसःस्रष्टुः ॥ निधिःआश्रयः ॥३२ ॥ त्वत्पादाब्जेति ॥ त्वत्पादाब्जरसास्वादेनमधुपइवाचरितवन्मानसंयेषांतइत्यर्थः ॥ ३३ ॥ लब्धमिति ॥ अस्माभिरितिशेषः ॥ ३४ ॥ प्रणवेति ॥ प्रणवार्थएवप्रकाशकोयस्यसः

तंदृष्ट्वामुनयःसर्वेप्रहृष्टवदनेक्षणाः ॥ अभ्युत्थानादिभिःसर्वैरुपचारैरुपाचरन् ॥ २५ ॥ आसनंप्रददुस्तस्मैसौवर्णं विष्टरंशुभम् ॥ सुखोपविष्टःसतदातस्मिन्सौवर्णविष्टरे ॥ २६ ॥ प्राहगंभीरयावाचापाराशर्योमहामुनिः ॥ व्यास उवाच ॥ कुशलंकिंनुयुष्माकंप्रवृत्तेऽस्मिन्महामखे ॥ २७ ॥ अर्चितःकिंतुयुष्माभिःसम्यगध्वरनायकः ॥ किमर्थमत्रयुष्माभिरध्वरेपरमेश्वरः ॥ २८ ॥ अर्चितोभक्तिभावेनसांबःसंसारमोचकः ॥ युष्मत्प्रवृत्तिर्मेभातिशुश्रूषापूर्वमेवहि ॥ २९ ॥ एवमुक्तामुनींद्रेणव्यासेनामिततेजसा ॥ मुनयोनैमिषारण्यवासिनःपरमौजसः ॥ ३० ॥ प्रणिपत्यमहात्मानमिदंवचनमब्रुवन् ॥ ऋषयऊचुः ॥ भगवन्मुनिशार्दूलसाक्षान्नारायणांशज ॥ ३१ ॥ त्वंहिसर्वजगद्भर्तुर्महादेवस्यवेधसः ॥ सांबस्यसगणस्यास्यप्रसादानांनिधिःस्वयम् ॥३२॥ त्वत्पादाब्जरसास्वादमधुपायितमानसाः ॥ कृतार्थावयमद्यैवभवत्पादाब्जदर्शनात् ॥ ३३ ॥ त्वदीयचरणांभोजदर्शनंखलुपापिनाम् ॥ दुर्लभंलब्धमधुनातस्मात्सुकृतिनोवयम् ॥ ३४ ॥ अस्मिन्देशेमहाभागनैमिषारण्यसंज्ञके ॥ दीर्घसत्रंवितन्वंतःप्रणवार्थप्रकाशकः ॥ ३५ ॥ ज्ञातव्यःपरमेशानइतिकृत्वाविनिश्चिताः ॥ परस्परंवितन्वंतःपरंभावंमहेशितुः ॥ ३६ ॥ अज्ञातवंतएवैतेवयंतस्माद्भवान्प्रभो ॥ छेत्तुमर्हतिनःसर्वान्संशयान्हृदयस्थितान् ॥ ३७ ॥ त्वदन्यःसंशयस्यास्यछेत्तानहिजगत्त्रये ॥ तस्मादपारगंभीरव्यामोहाब्धिनिमज्जितान् ॥ ३८ ॥ तारयस्वशिवज्ञानप्लवेनाऽस्मान्दयानिधे ॥ एवमभ्यर्थितस्तत्रमुनिभिर्वेदपारगैः ॥ ३९ ॥ सर्ववेदार्थविन्मुख्यःशुकतातोमहामुनिः ॥ वेदांतसारसर्वस्वंप्रणवंपरमेश्वरम् ॥ ४० ॥ ध्यात्वाहृत्कर्णिकामध्येसांबंसंसारमोचकम् ॥ प्रहृष्टमानसोभूत्वाव्याजहारतपोनिधिः ॥ ४१ ॥ इतिश्रीशिवमहापुराणे कैलाससंहितायामुत्तरभागेप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

यद्वाप्रणवार्थस्यस्वयमेवप्रकाशकइत्यर्थः ॥ ३५ ॥ विनिश्चिताइति ॥ विशिष्टंनिश्चितंनिश्चयोयेषांतेकृतनिश्चयाइत्यर्थः ॥ विचिन्वंतःविचारयंतः ॥ ३६ ॥ ॥ ३७ ॥ व्यामोहःशिवतत्वाज्ञानं ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ इतिश्रीशैवमहापुराणेकैलाससंहिताटीकायांसारबोधिन्यामुत्तरभागेप्रथमोऽध्यायः ॥ १ ॥

प्रणवार्थादिकंगौरीकैलासेऽपृच्छदीश्वरं॥प्रोक्तंव्यासेनतत्सर्वंद्वितीयेत्रनिरूप्यते ॥ १ ॥ १ ॥ प्रणवार्थप्रकाशकमिति ॥ अस्यजायतइत्युत्तरेणान्वयः ॥इतरे
पांशिवप्रसादशून्यानां ॥ ३ ॥ ४ ॥ आस्तिकाइति ॥ अनेनमुनीनामेतच्छ्रवणादावुत्कटश्रद्धास्तीतिसूचितं ॥ दाक्षायणींदक्षसंबंधिनींदक्षापत्यत्व
विशिष्टामित्यर्थः ॥ ५ ॥ शिवनिंदाप्रसंगेनेति ॥ दक्षयज्ञइतिशेषः ॥ त्यक्तेति ॥ दाक्षायणींतनुंत्यक्त्वासादेवीतपःप्रभावाद्धिमवतोगिरेःसुताभूदित्य
न्वयः ॥ ६ ॥ तस्मिन्हिमवति ॥ देवेऽपिशिवेऽपि ॥ ७ ॥ पंचकृत्येति ॥ पंचानांकृत्यानांसर्गस्थितिसंहारतिरोभावानुग्रहरूपाणांविधायकेत्यर्थः ॥

व्यासउवाच ॥ साधुपृष्टमिदंविप्राभवद्भिर्भाग्यवित्तमैः ॥ दुर्लभंहिशिवज्ञानंप्रणवार्थप्रकाशकम् ॥ १ ॥ येषांप्रस
न्नोभगवान्साक्षाच्छूलवरायुधः ॥ तेषामेवशिवज्ञानंप्रणवार्थप्रकाशकं ॥ २ ॥ जायतेनहिसंदेहोनेतरेषामितिश्रुतिः
॥ दीर्घसत्रेणयुष्माभिर्भगवानंबिकापतिः ॥ ३ ॥ उपासितइतीदंमेदृष्टमद्यविनिश्चितम् ॥ तस्माद्वक्ष्यामियुष्माक
मितिहासंपुरातनम् ॥ ४ ॥ उमामहेशसंवादरूपमद्भुतमास्तिकाः ॥ पुराकिलजगन्मातासतीदाक्षायणींतनुम् ॥
॥ ५ ॥ शिवनिंदाप्रसंगेनत्यक्त्वाहिमवतोगिरेः ॥ तपःप्रभावात्सादेवीसुताऽभून्मुनिसत्तमाः ॥ ६ ॥ तस्मिन्भूधरव
र्येतुस्वयंवरविधानतः ॥ देवेपिचकृतोद्वाहेदेवीदेवमभाषत ॥ ७ ॥ श्रीदेव्युवाच ॥ भगवन्परमेशानपंचकृत्यविधा
यक ॥ सर्वज्ञभक्तिसुलभपरमामृतविग्रह ॥ ८ ॥ दाक्षायणींतनुंत्यक्त्वापुत्रीहिमवतोगिरेः ॥ आसमद्यमहेशानमं
त्रदीक्षाविधानतः ॥ ९ ॥ मांविशुद्धात्मतत्वस्थांकुरुनित्यंमहेश्वर ॥ इतिसंचोदितोदेव्यादेवःशीतांशुभूषणः ॥ १० ॥
प्रत्युवाचततोदेवींयदिस्यात्तादृशीमतिः ॥ कैलासशिखरंगत्वाकरिष्येतादृशीमिति ॥ ११ ॥ ततोहिमवतोगत्वाकै
लासंभूधरेश्वरं ॥ तत्रदीक्षाविधानेनप्रणवादीननुक्रमात् ॥ १२ ॥ ॥ ॥

मंत्रदीक्षेति ॥ मंत्रदीक्षाविधानेनमांवि ॥ परमेति ॥ परमामृतःसर्वथानाशशून्योविग्रहोयस्यसइत्यर्थः ॥ ८ ॥
भक्तिसुलभ भक्त्यालभ्यस्त्वनन्ययेत्युक्तेः ॥ परमेति ॥ परमामृतःसर्वथानाशशून्योविग्रहोयस्यसइत्यर्थः ॥ ८ ॥ मंत्रदीक्षेति ॥ मंत्रदीक्षाविधानेनमांवि
शुद्धात्मतत्वस्थांकुर्वित्युत्तरेणसंबंधः ॥ ९ ॥ १० ॥ यत्प्रत्युवाचतदाह॥यदीति ॥ यदितवतादृशीमतिःस्यात्तदाकैलासशिखरंगत्वात्वांतादृशींविशुद्धात्मत
त्वस्थांकरिष्यइतिप्रत्युवाचेत्यर्थः ॥ ११ ॥ १२ ॥ ॥ ॥ ॥ ॥

॥ १३ ॥ सुमालिनीपार्वत्यामुख्यसखी ॥ १४ ॥ चतुराननमिति ॥ समीपस्थमितिभावःयद्वाचतुरायाःमंत्रादिग्रहणेदक्षायाःपार्वत्याआननंमुखं ॥ १५ ॥
॥ १६ ॥ भर्तुःशिवस्य ॥ १७ ॥ १८ ॥ वेदादिरिति ॥ प्रणवइतिसंबध्यते ॥ १९ ॥ देवादिभावनादेवादीनांभावनाचिंतना ॥ व्याप्यव्यापकतेति ॥ मंत्र

सार्द्धंदेव्यामहादेवोदेवोद्यानंगतोऽभवत् ॥ १३ ॥ ततःसुमालिनी
उक्त्वामंत्रान्महादेवींकृत्वाशुद्धात्मनिस्थिताम् ॥
अलंकृत्यततोदेवींस्वांकमारोप्यशं
समाहृतैःप्रफुल्लैस्तैःपुष्पैःकल्पतरूद्भवैः ॥ १४ ॥
मुख्यैर्देव्याःप्रियसखीजनैः ॥
ततःप्रियकथावृत्ताःपार्वतीपरमेशयोः ॥ हितायसर्वलोका
करः ॥ प्रहृष्टवदनस्तस्थौविलोक्यचतुराननम् ॥ १५ ॥
नांसाक्षाच्छुत्यर्थसंमिताः ॥ १६ ॥ तदासर्वजगन्माताभर्तुरंकंसमाश्रिता ॥ विलोक्यवदनंभर्तुरिदमाहतपोधनाः ॥
॥ १७ ॥ श्रीदेव्युवाच ॥ उपदिष्टास्त्वयादेवमंत्राःसप्रणवामता ॥ तत्रादौश्रोतुमिच्छामिप्रणवार्थविनिश्चयम् ॥ १८ ॥
कथंप्रणवउत्पन्नःकथंप्रणवउच्यते ॥ मंत्राःकतिसमाख्याताःकथंवेदादिरुच्यते ॥ १९ ॥ देवतावाकतिप्रोक्ताःकथं
देवादिभावना ॥ क्रियाःकतिविधाःप्रोक्ताव्याप्यव्यापकताकथम् ॥ २० ॥ ब्रह्माणिपंचमंत्रेऽस्मिन्कथंतिष्ठंत्यनुक्र
मात् ॥ कलाःकतिसमाख्याताःप्रपंचात्मकताकथम् ॥ २१ ॥ वाच्यवाचकसंबंधःस्थानानिचकथंशिव ॥ कोत्राधि
कारीविज्ञेयोविषयःकउदाहृतः ॥ २२ ॥ संबंधश्चैवकःप्रोक्तःकिंप्रयोजनमुच्यते ॥ अनुष्ठानविधिःकोवापूजास्थानं
चकिंप्रभो ॥ २३ ॥ पूजायांमंडलंकिंवाकिंवाऋष्यादिकंहर ॥ न्यासजातविधिःकोवाकोवापूजाविधिक्रमः ॥ २४ ॥
एतत्सर्वंवदेशानयद्यस्तिमयितेकृपा ॥ इतिदेव्यासमादिष्टोभगवानिंदुभूषणः ॥ तांविलोक्यमहेशानींवकुंसमुप
चक्रमे ॥ २५ ॥ इतिश्रीशिवमहापुराणेकैलाससंहितायामुत्तरभागेद्वितीयोध्यायः ॥ २ ॥ ईश्वरउवाच ॥ शृणुदेवि
प्रवक्ष्यामियन्मांत्वंपरिपृच्छसि ॥ तस्यश्रवणमात्रेणजीवःसाक्षाच्छिवोभवेत् ॥ १ ॥ ॥ ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अत्रप्रणवोपासनाविषये ॥ २१ ॥ प्रणवस्येतिशेषः ॥ प्रपंचात्मकतेति ॥ अस्मिन्प्रणवाख्ये ॥ २० ॥ स्थवर्णानामितिशेषः ॥ प्रणवस्यशिवेनोक्तमुद्धारादिकमादितः ॥ ओंनमःशिवाय ॥ २ ॥ इतिश्रीशिवमहापुराणेकैलाससंहिताटीकायांसारबोधिन्यामुत्तरभागेद्वितीयोऽध्यायः ॥ ॥ ॥ १ ॥ मात्रपदेनबहुक्लेशसाध्यमननादिनिरासः ॥ श्रवणमात्रेणेति ॥ १ ॥ मंत्रदीक्षादिकंपश्चात्तृतीयेतन्निरूप्यते

॥ २ ॥ वटबीजवदिति ॥ यथाविशालतरशाखावरोहादियुक्तोपिवटवृक्षःसूक्ष्मरूपेणकारणात्मनास्वबीजेतिष्ठतितद्वदस्मिन्प्रणवेमहानर्थोस्तीतिभावः ॥ कोसौमहानर्थस्तमाह ॥ देवइति ॥ ३ ॥ ४ ॥ समस्तंसमष्टिरूपंवैराजं ॥ व्यस्तंव्यष्टिरूपंस्थावरजंगमात्मकं ॥ ५ ॥ तेनसर्वार्थसाधकत्वेन ॥ ओमितीति ॥ ओमित्याकारकप्रणवादेवप्रथमंकृत्स्नंजगत्कुरुतइत्यर्थः ॥ शिवोवेति ॥ सर्वमेतदुक्तंमांडूक्योपनिषदि ॥ ओमित्येतदक्षरमिदꣳसर्वंतस्योपव्याख्यानंभूतंभवद्भविष्यदितिसर्वमोंकारएवयच्चान्यत्त्रिकालातीतंतदप्योंकारएवसर्वꣳह्येतद्ब्रह्मायमात्माब्रह्मेति ॥ ६ ॥ ऋषयइति ॥ वाच्यंवाचकयोरैक्यंमन्यमानाअतए

प्रणवार्थपरिज्ञानमेवज्ञानंमदात्मकम् ॥ बीजंतत्सर्वविद्यानांमंत्रंप्रणवनामकम् ॥ २ ॥ अतिसूक्ष्मंमहार्थंचज्ञेयंतद्वटबीजवत् ॥ देवोगुणत्रयातीतःसर्वज्ञःसर्वकृत्प्रभुः ॥ ३ ॥ ओमित्येकाक्षरेमंत्रेस्थितःसर्वगतःशिवः ॥ यदस्तिवस्तुतत्सर्वंगुणप्राधान्ययोगतः ॥ ४ ॥ समस्तंव्यस्तमपिचप्रणवार्थंप्रचक्षते ॥ सर्वार्थसाधकंतस्मादेकंब्रह्मैतदक्षरम् ॥ ५ ॥ तेनोमितिजगत्कृत्स्नंकुरुतेप्रथमंशिवः ॥ शिवोवाप्रणवोह्येषप्रणवोवाशिवःस्मृतः ॥ ६ ॥ वाच्यवाचकयोर्भेदोनात्यंतंविद्यतेयतः ॥ तस्मादेकाक्षरंदेवंमांब्रह्मऋषयोविदुः ॥ ७ ॥ वाच्यवाचकयोरैक्यंमन्यमानामनस्विनः ॥ अतस्तदेवजानीयान्मुमुक्षुःपरमेश्वरि ॥ ८ ॥ तत्रादौसंप्रवक्ष्यामिप्रणवोद्धारमंबिके ॥ निवृत्तिमुद्धरेत्पूर्वमिंधनांचततःपरम् ॥ ९ ॥ कालंसमुद्धरेत्पश्चाद्दंडमीश्वरमेवच ॥ वर्णपंचकरूपोयमेवंप्रणवउद्धृतः ॥ १० ॥ ब्रह्मादिस्थावरांतानांसर्वेषांप्राणिनांखलु ॥ प्राणःप्रणवएवाऽयंतस्मात्प्रणवईरितः ॥ ११ ॥ अकारश्चाप्युकारोथमकारश्चत्रयंक्रमात् ॥ तिस्रोमात्राःसमाख्याताअर्धमात्राततःपरम् ॥ १२ ॥ अर्धमात्रामहेशानिबिंदुनादस्वरूपिणी ॥ ईशानःसर्वविद्यानामित्याद्याःश्रुतयःप्रिये ॥ १३ ॥ ॥ ॥ ॥ ॥

वमनस्विनऋषयोमामेकाक्षरंब्रह्मविदुरित्यन्वयः ॥ ७ ॥ तदेवपूर्वोक्तमेवब्रह्म ॥ ८ ॥ निवृत्तिमिति ॥ एतदाख्यामकाराश्रयकलामित्यर्थः ॥ एवमग्रेपि ॥ ९ ॥ १० ॥ प्राणोजीवनाधारः ॥ ११ ॥ ततःपरंमकारात्परं ॥ १२ ॥ ईशानइति ॥ ईशानःसर्वविद्यानामीश्वरःसर्वभूतानामित्याद्याःआद्यशब्देन योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्माइत्यादयः ॥ एताःश्रुतयोवेदामत्तएवभवंतिप्रादुर्भवंतीतिसत्यमेववदंतीतिसंबंधः ॥ १३ ॥

तस्मान्मुख्योवेदादिरहमेवास्मीत्यभिप्रेत्याह ॥ वेदादिरिति ॥ वेदानामादिःप्रथमप्रकाशकइत्यर्थः ॥ वाचकइति ॥ तस्यवाचकःप्रणवइतिपतंजलिनाप्युक्तं
॥ १४ ॥ प्रणवेतुवेदादित्वमौपचारिकमित्याह ॥ वाचकत्वादिति ॥ इतःपरंप्रणवावयवाकारादीनांब्रह्मादितादात्म्यमाह ॥ अकारइति ॥ महद्बीजंसृष्टि
साधनं ॥ १५ ॥ योनिःआधारतयासृष्टिसाधनं ॥ १६ ॥ तिरोभावःतिरोभावयतीतितिरोभावः ॥ १७ ॥ १८ ॥ उत्तरोत्तरमिति ॥ अकारमपेक्ष्योका
रोव्यापकःउकाराच्चाकारवर्णमधस्तनंव्याप्यमेवमग्रिमवर्णेष्वपिभावयेदित्यर्थः ॥ १९ ॥ सद्यादिति ॥ अकारादिषुपंचसुवर्णेषुस्थितानियानिपंचब्रह्माणि

मत्तएवभवंतीतिवेदाःसत्यंवदंतिहि ॥ तस्माद्वेदादिरेवाहंप्रणवोममवाचकः ॥ १४ ॥ वाचकत्वात्सममैषोपिवेदादिरि
तिकथ्यते ॥ अकारस्तुमहद्बीजंरजःस्रष्टाचतुर्मुखः ॥ १५ ॥ उकारःप्रकृतिर्योनिःसत्वंपालयिताहरिः ॥ मकारःपुरु
षोबीजीतमःसंहारकोहरः ॥ १६ ॥ बिंदुर्महेश्वरोदेवस्तिरोभावउदाहृतः ॥ नादःसदाशिवःप्रोक्तःसर्वानुग्राहकःप्र
भुः ॥ १७ ॥ नादमूर्धनिसंचिंत्यःपरात्परतरःशिवः ॥ सर्वज्ञःसर्वकर्ताचसर्वेशोनिर्मलोऽद्वयः ॥ १८ ॥ अकारादि
षुवर्णेषुव्यापकंचोत्तरोत्तरम् ॥ व्याप्यंत्वधस्तनंवर्णमेवंसर्वत्रभावयेत् ॥ १९ ॥ सद्यादीशानपर्यंतान्यकारादिषुपंच
सु ॥ स्थितानिपंचब्रह्माणितानिमन्मूर्तयःक्रमात् ॥ २० ॥ अष्टौकलाःसमाख्याताअकारेसद्यजाःशिवे ॥ उकारेवा
मरूपिण्यस्त्रयोदशसमीरिताः ॥ २१ ॥ अष्टावघोररूपिण्योमकारेसंस्थिताःकलाः ॥ बिंदौचतस्रःसंभूताःकलाःपु
रुषगोचराः ॥ २२ ॥ नादेपंचसमाख्याताःकलाईशानसंभवाः ॥ षड्विधैक्यानुसंधानात्प्रपंचात्मकतोच्यते ॥ २३ ॥
मंत्रोयंत्रंदेवताचप्रपंचोगुरुरेवच ॥ शिष्यश्चषट्पदार्थानामेषामर्थंशृणुप्रिये ॥ २४ ॥ पंचवर्णसमष्टिःस्यान्मंत्रःपूर्व
मुदाहृतः ॥ सएवयंत्रतांप्राप्तोवक्ष्येतन्मंडलक्रमम् ॥ २५ ॥ यंत्रंतुदेवतारूपंदेवताविश्वरूपिणी ॥ विश्वरूपोगुरुः
प्रोक्तःशिष्योगुरुवपुःस्मृतः ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

॥ २१ ॥ २२ ॥ षड्विधैक्यानुसंधा ॥ इदानीमकारादिषुकलासंख्यामाह ॥ अष्टाविति
सद्यवामदेवाघोरपुरुषेशानरूपाणितानिमन्मूर्तयइत्यर्थः ॥ २० ॥ इदानीमकारादिषुकलासंख्यामाह ॥ अष्टाविति ॥ २१ ॥ २२ ॥ षड्विधैक्यानुसंधा
नात्वक्ष्यमाणषड्विधपदार्थैक्यानुसंधानात्प्रपंचात्मकताप्रणवस्येतिशेषः ॥ २३ ॥ प्रपंचोविश्वं ॥ अर्थप्रयोजनं ॥ २४ ॥ ऐक्यानुसंधानप्रकारमाह ॥ पंच
वर्णेति ॥ पूर्वमुदाहृतःप्रणवात्मकः ॥ २५ ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

ओमितीति ॥ ओमितीद ँसर्वमितितैत्तिरीयश्रुतिः ॥ ओंकारएवसर्वंह्येतद्ब्रह्मेतिमांडूक्यं ॥ २७ ॥ देवीप्रश्नानुसारेणेश्वरचिंतनस्थानान्याह ॥ आधारइ
ति ॥ आधारोमूलाधारःमणिपूरस्तदुपरितनंचक्रं ॥ एवमुत्तरत्र ॥ २८ ॥ भक्तानामाशुप्रवृत्त्यर्थमनुवंधचतुष्टयंप्रश्नानुसारेणाह ॥ अधिकारीति ॥ २९ ॥
॥ ३० ॥ वोध्यवोधकभावइति ॥ ब्रह्मजीवयोरैक्यंबोध्यं ॥ बोधकःप्रणवः ॥ ३१ ॥ भूदेवोविप्रः ॥ ३२ ॥ यतिंयमनियमादिशीलं ॥ ३३ ॥

॥४॥ ओमितीदंसर्वमितिसर्वंब्रह्मेतिचश्रुतेः ॥ वाच्यवाचकसंबंधोप्ययमेवार्थईरितः ॥ २७ ॥ आधारोमणिपूरश्चहृदयं चततःपरम् ॥ विशुद्धिराज्ञाचततःशक्तिःशांतमितिक्रमात् ॥ २८ ॥ स्थानान्येतानिदेवेशिशांत्यतीतंपरात्परम् ॥ अधिकारीभवेद्यस्यवैराग्यंजायतेदृढम् ॥ २९ ॥ विषयःस्यामहंदेविजीवब्रह्मैक्यभावनात् ॥ जीवात्मनोमयासार्धमैक्यस्यप्रणवस्यच ॥ ३० ॥ बोध्यबोधकभावोत्रसंबंधःसमुदीरितः ॥ व्रतादिनिरतःशांतस्तपस्वीविजितेंद्रियः ॥ ३१ ॥ शौचाचारसमायुक्तोभूदेवोवेदनिष्ठितः ॥ विषयेषुविरक्तःसन्नैहिकामुष्मिकेषुच ॥ ३२ ॥ सर्वशास्त्रार्थतत्त्वज्ञंवेदांतज्ञानपारगम् ॥ आचार्यमुपसंगम्ययतिंमतिमतांवरम् ॥ ३३ ॥ दीर्घदंडप्रणामाद्यैस्तोषयेद्यत्नतःसुधीः ॥ योगुरुःसशिवःप्रोक्तोयःशिवःसगुरुःस्मृतः ॥ ३४ ॥ इतिनिश्चित्यमनसास्वविचारंनिवेद्यच ॥ लब्ध्वानुज्ञस्तुगुरुणाद्वादशाहंपयोव्रती ॥ ३५ ॥ समुद्रतीरेनद्यांवापर्वतेवाशिवालये ॥ शुक्लपक्षेतुपंचम्यामेकादश्यामथापिवा ॥ ३६ ॥ प्रातःस्नात्वाविशुद्धात्माकृतनित्यक्रियःसुधीः ॥ गुरुमाहूयविधिनानांदीश्राद्धंविधायच ॥ ३७ ॥ क्षौरंचकारयित्वाथकक्षोपस्थविवर्जितम् ॥ केशश्मश्रुनखानांतुस्नात्वानियतमानसः ॥ ३८ ॥ सक्तुंप्राश्याथसायान्हेस्नात्वासंध्यामुपास्यच ॥ सायमौपासनंकृत्वागुरुणासहितोद्विजः ॥ ३९ ॥ वस्त्रादिदक्षिणांदद्याच्छिवायगुरुरूपिणे ॥ होमद्रव्याणिसंपाद्यस्वसूत्रोक्तविधानतः ॥ ४० ॥ अग्निमाधायविधिवल्लौकिकादिविभेदतः ॥ आहिताग्निस्तुयःकुर्यात्प्राजापत्येष्टिमाहिते ॥ ४१॥ श्रौतेवैश्वानरेसम्यक्सर्ववेदसदक्षिणाम् ॥ अथाग्निमात्मन्यारोप्यब्राह्मणःप्रव्रजेद्गृहात् ॥ ४२ ॥ ॥४॥

दीर्घेति ॥ दीर्घदंडतुल्योयःप्रणामस्तदाद्यैः ॥ ३४ ॥ निवेद्येति ॥ गुरवइतिशेषः ॥ ३५ ॥ ३६ ॥ ३७ ॥ केशेति ॥ केशश्मश्रुनखानामेवक्षौरंकार
यित्वेत्यन्वयः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ सर्ववेदसेति ॥ सर्ववेदसंसर्वस्वंधनंदक्षिणायस्यांतांप्राजापत्येष्टिं ॥ ४२ ॥ ॥

॥ ४४ ॥ जपेदिति ॥ अस्यगायत्रीमित्यग्रिमेणसंबंधः ॥ ४५ ॥
पौरुषेणसहस्रशीर्षापुरुषइत्यादिना ॥ ४३ ॥ सौविष्टकृतींस्विष्टकृत्संबंधिनीमाहुतिं ॥ ४४ ॥ जपेदिति ॥ अस्यगायत्रीमित्यग्रिमेणसंबंधः ॥ ४५ ॥ गर्भमुक्तःगर्भवासदुःखान्मुक्तःजीवन्मुक्तइतिभावः ॥ ४७ ॥ ४८ ॥
विरजांतंविरजाहोमांतं ॥ ४६ ॥ वामदेव्यस्यमुख्यत्वेहेतुमाह ॥ गर्भमुक्तइति ॥ लोकवर्तनेलोकव्यवहारेचिकीर्षितेसतीतिशेषः ॥ मु
प्राविशेदिति ॥ प्रजपेदितिपाठांतरं ॥ एषणानांपुत्रैषणावित्तैषणालोकैषणानांत्रयं ॥ ४९ ॥ ५० ॥

पौरुषेणैवसूक्तेनहुत्वाप्रत्यृचमात्मवान् ॥ ४३ ॥ हुत्वाचसौविष्टकृतींस्वसू
श्रपयित्वाचरुंतस्मिन्समिदन्नाज्यभेदतः ॥ त्रोक्तविधानतः ॥ हुत्वोपरिष्टात्तंत्रंचतेनाग्नेरुत्तरेबुधः ॥ ४४ ॥ स्थित्वासनेजपेन्मौनीचीराजिनकुशोत्तरे ॥ यावद्ब्राह्म
मुहूर्तंतुगायत्रींदृढमानसः ॥ ४५ ॥ ततःस्नात्वायथापूर्वंश्रपयित्वाचरुंततः ॥ पौरुषंसूक्तमारभ्यविरजांतंहुनेद्बुधः ॥
॥ ४६ ॥ वामदेवमतेनापिशौनकादिमतेनवा ॥ तत्रमुख्यंवामदेव्यंगर्भमुक्तोयतोमुनिः ॥ ४७ ॥ होमशेषंसमाप्या
थप्रातरौपासनंहुनेत् ॥ ततोग्निमात्मन्यारोप्यप्रातःसंध्यामुपास्यच ॥ ४८ ॥ सवितर्युदितेपश्चात्सावित्रींप्राविशेक्र
मात् ॥ एषणानांत्रयंत्यक्त्वाप्रैषमुच्चार्यचक्रमात् ॥ ४९ ॥ शिखोपवीतेसंत्यज्यकटिसूत्रादिकंततः ॥ विसृज्यप्राङ्मु
खोगच्छेदुत्तराशामुखोथवा ॥ ५० ॥ गृण्हीयाद्दंडकौपीनाद्युचितंलोकवर्तने ॥ विरक्तश्चेन्नगृण्हीयाल्लोकवृत्तिविचा
रणे ॥ ५१ ॥ गुरोःसमीपंगत्वाथदंडवत्प्रणमेत्त्रयम् ॥ समुत्थायततस्तिष्ठेद्गुरुपादसमीपतः ॥ ५२ ॥ ततोगुरुःसमा
दायविरजानलजंसितम् ॥ भस्मतेनैवतंशिष्यंसमुद्धूल्ययथाविधि ॥ ५३ ॥ अग्निरित्यादिभिर्मंत्रैस्त्रिपुंड्रान्धारये
त् ॥ ५४ ॥ हस्तंनिधायशिरसिशिष्यस्यप्रीतमानसः ॥ ऋष्यादिस
ततः ॥ हृत्पंकजेसमासीनंमांत्वयासहचिंतयेत् ॥ हितंतस्यदक्षकर्णेसमुच्चरेत् ॥ ५५ ॥ प्रणवंत्रिप्रकारंतुततस्तस्यार्थमादिशेत् ॥ षड्विधार्थंपरिज्ञायगुरुंप्रणम्यदंडव
त् ॥ ५६ ॥ तदधीनोभवेन्नित्यंवेदांतंसम्यगभ्यसेत् ॥ मामेवचिंतयेन्नित्यंपरमात्मानमात्मनि ॥ ५७ ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ अग्निरित्यादिभिःअग्निरितिभस्मवा
ख्यपक्षमाह ॥ विरक्तइति ॥ लोकवृत्तिविचारणेलोकवृत्तिर्दुःस्थितेत्येवंविचारणेसतीत्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ अग्निरित्यादिभिःअग्निरितिभस्मवा
युरितिभस्मेत्यादिभिः ॥ धारयेदिति ॥ शिष्यस्येतिभावः ॥ ५४ ॥ तस्याशिष्यस्यदक्षकर्णेदक्षिणकर्णेत्रिप्रकारंसूक्ष्मादिपूर्वोक्तभेदेनत्रिविधंप्रणवंसमुच्चरेदि ॥
त्यन्वयः ॥ ५५ ॥ तस्यप्रणवस्य॥ततःशिष्यकृत्यमाह ॥ षड्विधेति॥षड्विधार्थंपूर्वोक्तमंत्रयंत्रादिकं ॥ ५६ ॥ तदधीनःगुर्वधीनः ॥ ५७ ॥

शमादीति ॥ आदिनादमतितिक्षादयः ॥ ५८ ॥ विरजंनिर्दोषं ॥ विशदंभास्वरं ॥५९॥ आधारशक्तिमिति ॥ तस्यहृत्पुंडरीकस्यमध्यतआधारशक्तिमारभ्यत्रितत्वांतमयंआधारमणिपूरहृदयतत्वांतमयंपदंविचिंत्यतत्रदहराख्यंव्योमभावयेदित्यन्वयः ॥ ६० ॥ तस्यदहराख्यव्योम्नः ॥ ६१ ॥ ६२ ॥ ६३ ॥

शमादिधर्मनिरतोवेदांतज्ञानपारगः ॥ अत्राधिकारीसप्रोक्तोयतिर्विगतमत्सरः ॥ ५८ ॥ हृत्पुंडरीकंविरजंविशोकं विशदंपरम् ॥ अष्टपत्रंकेसराढ्यंकर्णिकोपरिशोभितं ॥ ५९ ॥ आधारशक्तिमारभ्यत्रितत्वांतमयंपदम् ॥ विचिंत्य मध्यतस्तस्यदहरंव्योमभावयेत् ॥ ६० ॥ ओमित्येकाक्षरंब्रह्मव्याहरन्मांलयासह ॥ चिंतयेन्मध्यतस्तस्यनित्यमुद्यु क्तमानसः ॥ ६१ ॥ एवंविधोपासकस्यमल्लोकगतिरेवच ॥ मत्तोविज्ञानमासाद्यमत्सायुज्यफलंप्रिये ॥ ६२ ॥ ब्राह्मे मुहूर्तउत्थायशिरसिश्वेतपंकजे ॥ सहस्त्रारेसमासीनंगुरुंसंचिंतयेद्यतिः ॥ ६३ ॥ शुद्धस्पटिकसंकाशंद्विनेत्रंवरदा भये ॥ दधानंशिवसद्भावंभावनातिमनोहरम् ॥ ६४ ॥ भावोपनीतैःसंपूज्यगंधादिभिरनुक्रमात् ॥ बद्धांजलिपुटो भूत्वानमस्कृत्यगुरुंततः ॥ ६५॥ प्रातःप्रभृतिसायांतंसायादिप्रातरंततः ॥ यत्करोमिजगन्नाथतदस्तुतवपूजनम् ॥ ॥ ६६ ॥ इतिविज्ञाप्यगुरवेलब्धानुज्ञस्ततोगुरोः ॥ निरुद्धप्राणआसीनोविजितात्माजितेंद्रियः ॥ ६७ ॥ मूला दिब्रह्मरंध्रांतंप्रणवंपरिचिंतयेत् ॥ विद्युत्कोटिसमंधीमान्शिरोनासिकयासह ॥ ६८ ॥ विशोध्यदेहंविधिवत्तृणमा धायभूतले ॥ गृहीतशिश्नउत्थायततोगच्छेज्जलाशयम् ॥ ६९ ॥ उद्धृत्यवायथान्यायंशौचंकुर्यादतंद्रितः ॥ हस्तौ पादौचसंशोध्यद्विराचम्योमितिस्मरन् ॥ ७० ॥ उत्तराभिमुखोमौनीदंतधावनमाचरेत् ॥ तृणपर्णैःसदाकुर्यादमाए कादर्शींविना ॥ ७१ ॥ अपांद्वादशगंडूषैर्मुखंसंशोधयेत्ततः ॥ द्विराचम्यमृदातोयैःकटिशौचंविधायच ॥ ७२ ॥ अ रुणोदयकालेतुस्नानंकुर्यान्मृदासह ॥ गुरुंसंस्मृत्यमांचैवस्नानसंध्याद्यमाचरेत् ॥ ७३ ॥ ॥

शिवसद्भावमिति ॥ शिवस्यसद्भावोयस्मिन्तं ॥ अथवाशिववत्साधुभावोयस्यतंअथवादधानमितिमध्यमणिन्यायेनोभयत्राचेतिवरदाभयेशिवसद्भावंचदधानमिति ॥ भावनातिमनोहरंचिंतनमात्रेणैवातिसुंदरत्वेनभासमानं ॥ ६४ ॥ भावोपनीतैःभावनयोपनीतैर्मानसैरित्यर्थः ॥ ६५ ॥ ६६ ॥ ६७ ॥ शिरइति ॥ शिरोयुक्तनासिकयासहदेहंविशोध्येत्यग्रिमेणान्वयः ॥ शरीरस्थमलशोधनंकृत्वेत्यर्थः ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

॥ ७४ ॥ अंगोपमार्जनमंगमार्जनसाधनीभूतवस्त्रं ॥७५॥ मृज्यमृष्ट्वा ॥तेनैवपूर्वोक्तवस्त्रेणैव ॥ ७६ ॥ ७७ ॥ आपोवेतीति ॥ आपोवाइदꣳसर्वमितिमंत्रेणे त्यर्थः ॥ तेनैवमंत्रितजलेनैवभस्मसेचयेत्॥७८॥संमर्द्येति ॥ पूर्वोक्तमंत्राभ्यांभस्मसंमर्द्यकवलद्वंद्वंकुर्यादित्यर्थः ॥एकमिति॥एकंसंमर्दितंभस्मकवलंपंचधाकु र्यात्विभजेदित्यर्थः ॥ ७९ ॥ येषुस्थानेषुकुर्यात्तान्याह ॥ शिरइति ॥८०॥ उद्धूल्येति ॥ पश्चाद्द्वितीयंभस्मकवलमुद्धूल्यप्रणवेनसर्वांगमभिषेचयेदित्यर्थः ॥

आबध्यशंखमुद्रांचप्रणवेनाभिषेचयेत् ॥ शिरसिद्वादशावृत्त्यातदर्धंवातदर्धकम् ॥ ७४ ॥ तीरमागत्यकौपीनंप्रक्षा ल्याचम्यचद्विधा ॥ प्रोक्षयेत्प्रणवेनैववस्त्रमंगोपमार्जनम् ॥ ७५ ॥ मुखंप्रथमतोमृज्यशिरआरभ्यसर्वतः ॥ तेनैव मार्जयेद्देहंस्थित्वाचगुरुसंन्निधौ ॥ ७६ ॥ आबध्यवाग्यतःशुद्धंकौपीनंचसदोरकम् ॥ द्विराचम्यसमादायभस्मस द्यादिमंत्रतः ॥ ७७ ॥ अग्निरित्यादिभिर्मंत्रैरभिमंत्र्यस्पृशेत्तनुं ॥ आपोवेत्यभिमंत्र्याथजलंतेनैवसेचयेत् ॥ ७८ ॥ ओमापोज्योतिरित्युक्त्वामानस्तोकेतिमंत्रतः ॥ संमर्द्यकवलद्वंद्वंकुर्यादेकंतुपंचधा ॥ ७९ ॥ शिरोवदनहृद्गुह्यपादेषुप रमेश्वरि ॥ ईशानादिसमारभ्यसद्यांतंपंचभिःक्रमात् ॥ ८० ॥ उद्धूल्यकवलंपश्चात्प्रणवेनाभिषेचयेत् ॥ सर्वांगंच ततोहस्तौप्रक्षाल्यान्यत्समाहरेत् ॥ ८१ ॥ संमर्द्यपूर्ववत्तत्तुत्रिपुंड्रांस्तेनधारयेत् ॥ त्रियायुषैस्त्र्यंबकैश्चप्रणवेनशि वेनच ॥ ८२ ॥ शिरस्यथललाटेचवक्षसिस्कंधएवच ॥ नाभौबाह्वोःसंधिषुचपृष्ठेचैवयथाक्रमम् ॥ ८३ ॥ प्रक्षाल्य हस्तौचततोद्विराचम्ययथाविधि ॥ पंचीकरणमुच्चार्यभावयेत्स्वंगुरुंबुधः ॥ ८४ ॥ वक्ष्यमाणप्रकारेणप्राणायामान् षडाचरेत् ॥ ऋष्यादिकंचकृत्वाथवक्ष्यमाणविधानतः ॥ ८५ ॥ दक्षहस्तेनसंगृह्यजलंवामेनपाणिना ॥ समारु ध्येंद्रियद्वारंप्रणवेनाभिमंत्रयेत् ॥ ८६ ॥ एवंत्रिवारंसंप्रोक्ष्यशिरसित्रिःपिबेत्ततः ॥ समाहितेनमनसाध्यायन्नों कारमीश्वरम् ॥ ८७ ॥ ॥ ॥ ॥ ॥ ॥

अन्यद्भस्म ॥ ८१ ॥ तत्भस्म ॥ त्रियायुषैःत्र्यायुषंजमदग्नेरित्यादिभिः ॥ त्र्यंबकैःत्र्यंबकंयजामहइत्यादिभिःशिवसंबंधिभिः ॥ शिवेनशिवात्मकेन ॥ ८२ ॥ शिरसीति ॥ धारयेदितिसंबध्यते ॥ ८३ ॥ पंचीकरणंपंचाक्षरं ॥ ८४ ॥ ८५ ॥ दक्षेति ॥ जलंदक्षहस्तेनसंगृह्यवामेनपाणिनेंद्रियद्वारंनासिकादिद्वारंसमा रुध्यप्रणवेनाभिमंत्रयेत् ॥ ८६ ॥ एवमिति ॥ एवंत्रिवारंअभिमंत्रयेत् ॥ ततःशिरसिसंप्रोक्ष्यत्रिःपिबेदित्यन्वयः ॥ ८७ ॥ ॥

॥ ८८ ॥ ८९ ॥ द्विषड्वारंद्वादशवारं ॥ ९० ॥ ९१ ॥ ९२ ॥ इतिश्रीशैवमहापुराणकैलाससंहिताटीकायांसारबोधिन्यामुत्तरभागेतृतीयोध्यायः ॥ ॥ ३ ॥ ओंनमःशिवाय ॥ लेखनीयंयथायंत्रंप्रणवार्थप्रकाशकं ॥ भुव्यब्जकर्णिकायांतच्चतुर्थेत्रनिरूप्यते ॥ १ ॥ १ ॥ अरत्नीति ॥ निर्मुक्तकनिष्ठाकमुष्ट्युपलक्षितोहस्तोऽरत्निस्तद्युग्मप्रमाणेनेत्यर्थः ॥ अरत्निस्तुनिष्कनिष्ठेनमुष्टिनेतिकोशात् ॥ २ ॥ तत्रयत्कर्तव्यंतदाह ॥ तालपत्रमिति ॥ तत्समायाम



सौरमंडलमध्यस्थंसर्वतेजोमयंपरम् ॥ अष्टबाहुंचतुर्वक्त्रमर्धनारीकमद्भुतम् ॥ ८८ ॥ सर्वाश्चर्यगुणोपेतंसर्वालंकारशोभितम् ॥ एवंध्यात्वाथविधिवद्दद्यादर्घ्यत्रयंततः ॥ ८९ ॥ अष्टोत्तरशतंजप्त्वाद्विषड्वारंतुतर्पयेत् ॥ पुनराचम्यकुर्वीतप्राणायामत्रयंततः ॥ ९० ॥ ऋष्यादिकंचविधिवत्कृत्वामौनंसमाश्रितः ॥पूजासदनमासाद्यपादौप्रक्षाल्यवाग्यतः ॥ ९१ ॥ द्विराचम्यविधानेनदक्षपादपुरःसरम् ॥ प्रविश्यमंडपंतत्रमंडलंरचयेत्क्रमात् ॥ ९२ ॥ इतिश्रीशिवमहापुराणेकैलाससंहितायामुत्तरभागेतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ईश्वरउवाच ॥ परीक्ष्यभूमिंविधिवद्गंधवर्णरसादिभिः ॥ मनोभिलषितेतत्रवितानविततांबरे ॥ १ ॥ सुप्रलिप्तेमहीपृष्ठेदर्पणोदरसन्निभे ॥ अरत्नियुग्ममानेनचतुरस्रंप्रकल्पयेत् ॥ २ ॥ तालपत्रंसमादायतत्समायामविस्तरम् ॥ तस्मिन्भागान्प्रकुर्वीतत्रयोदशसमांशकं ॥ ३ ॥ तत्पत्रंतत्रनिक्षिप्यपश्चिमाभिमुखःस्थितः ॥ तत्पूर्वभागेसुदृढंसूत्रमादायरंजितम् ॥ ४ ॥ प्राक्प्रत्यग्दक्षिणोदक्चचतुर्दशनिपातयेत् ॥ सूत्राणिदेवदेवेशिनवषष्ठ्युत्तरंशतम् ॥ ५ ॥ कोष्ठानिस्युस्ततस्तस्यमध्यकोष्ठंतुकर्णिका ॥ कोष्ठाष्टकंवहिस्तस्यदलाष्टकमिहोच्यते ॥ ६ ॥ ॥ ॥ ॥ ॥

विस्तरंतेनचतुरस्रेणसमावायामविस्तारौयस्यतत् ॥ तस्मिन्निति ॥ तस्मिन्तालपत्रेत्रयोदशभागान्समांशकंयथास्यात्तथाप्रकुर्वीतेत्यर्थः ॥ ३ ॥ तत्रचतुरस्रमंडले ॥ तत्पूर्वभागेचतुरस्रमंडलपूर्वभागेस्थितइत्यन्वयः ॥ ४ ॥ चतुर्दशेति ॥ चतुर्दशसूत्राणिनिपातयेदित्यन्वयः ॥ नवषष्टीति ॥ एवंकरणेनतत्रनवषष्ट्युत्तरंशतंकोष्ठानिस्युरित्यग्रिमेणान्वयः ॥ ५ ॥ तस्यमध्यकोष्ठस्य ॥ ६ ॥ ॥ ॥ ॥ ६ ॥

रक्तमिति ॥ वनभित्वनानिनिलयास्तद्भेदकृत्संधिस्थानंरक्तंपीतकंचकृत्वेतिसंबंधः ॥ क्लीवेस्यात्काननेतीरेनिवासेनिलयेवनमितिरभसः ॥ कचिन्नवभिदितिपाठः ॥ ७ ॥ दलदक्षंदक्षिणदलं ॥ क्रमेणप्रदक्षिणक्रमेण ॥ ८ ॥ कर्णिकायांमध्यकोष्ठे ॥ ९ ॥ तदुपरिश्रीकंठोपरि ॥ मध्यतःश्रीकंठामरेशयोर्मध्ये ॥ तन्मस्तकस्थंमहाकालमस्तकसमीपस्थं ॥ १० ॥ क्रमादिति ॥ विचित्रयेदितिसंबध्यते ॥ ११ ॥ रक्तामिति ॥ एवंरक्तंवर्णैरंजितंयंत्रंसमालिख्य

दलानिश्वेतवर्णानिश्यामाग्राणिप्रकल्पयेत् ॥ पीतरूपांकर्णिकांचकलारक्तंचपीतकम् ॥ ७ ॥ वनभिद्दलदक्षंतुसमारभ्यसुरेश्वरि ॥ रक्तकृष्णाःक्रमेणैवदलसंधीर्विचित्रयेत् ॥ ८॥ कर्णिकायांलिखेद्यंत्रंप्रणवार्थप्रकाशकम् ॥ अधःपीठंसमालिख्यश्रीकंठंचतदूर्ध्वतः ॥ ९ ॥ तदुपर्यमरेशंचमहाकालंचमध्यतः ॥ तन्मस्तकस्थंदंडंचततईश्वरमालिखेत् ॥ १० ॥ श्यामेनपीठंपीतेनश्रीकंठंचविचित्रयेत् ॥ अमरेशंमहाकालंरक्तकृष्णंचतौक्रमात् ॥ ११ ॥ कुर्यात्सुधूम्रंदंडंचधवलंचेश्वरंबुधः ॥ एवंयंत्रंसमालिख्यरक्तंसद्येनवेष्टयेत् ॥ १२ ॥ तदुत्थेनैवनादेनभिंद्यादीशानमीश्वरि ॥ तद्बाह्यपंक्तौगृण्हीयादाग्नेयादिक्रमेणवै ॥ १३ ॥ कोष्ठानिकोणभागेषुचत्वार्येतानिसुंदरि ॥ शुक्लेनापूर्यवर्णादिचतुष्कंरक्तधातुभिः॥ १४ ॥ आपूर्यतानिचत्वारिद्वाराणिपरिकल्पयेत् ॥ ततस्तत्पार्श्वयोर्द्वंद्वंपीतेनैवप्रपूरयेत् ॥ १५॥ आग्नेयकोष्ठमध्येतुपीताभेचतुरस्रके ॥ अष्टपत्रंलिखेत्पद्मंरक्ताभंपीतकर्णिकम् ॥ १६ ॥ हकारंविलिखेन्मध्येबिंदुयुक्तंसमाहितः ॥ पद्मस्यनैर्ऋतेकोष्ठेचतुरस्रांतरालिखेत् ॥ १७ ॥ पद्ममष्टदलंरक्तंपीतकिंजल्ककर्णिकम् ॥ शवर्गस्यतृतीयंतुषष्ठस्वरसमन्वितम् ॥ १८ ॥ चतुर्दशस्वरोपेतंबिंदुनादविभूषितम् ॥ एतद्बीजवरंभद्रेपद्ममध्येसमालिखेत् ॥ १९ ॥ पद्मस्येशानकोष्ठेतुतथापद्मंसमालिखेत् ॥ कवर्गस्यतृतीयंतुपंचमस्वरसंयुतम् ॥ २० ॥

सद्येनसद्योजातमितिमंत्रेणवेष्टयेत् आच्छादयेत् ॥ १२ ॥ १३ ॥ वर्णादीति ॥ रक्तधातुभिःसहवर्णादिचतुष्कंकुंकुमादिवर्णचतुष्टयमापूर्यतानिचत्वारिद्वाराणिपरिकल्पयेदित्यग्रिमेणसंबंधः ॥ १४ ॥ तत्पार्श्वयोर्द्वारपार्श्वयोः ॥ १५ ॥ १६ ॥ चतुरस्रांतराचतुरस्रमध्ये ॥ १७ ॥ शवर्गस्यतृतीयंसकारःषष्ठस्वरऊकारः ॥ १८ ॥ चतुर्दशस्वरऔकारः ॥ १९ ॥ कवर्गस्यतृतीयंगकारः ॥ पंचमस्वरउकारः ॥ २० ॥ ॥

तस्यऐशानपद्मस्य ॥ विंदुकंठंकंठभागेविंदुभूषितं ॥ २१ ॥ मध्यंमध्यकोष्ठं ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ तेषुषट्कोणादिषुचतुर्षु ॥ २६ ॥ २७ ॥

विलिखेन्मध्यतस्तस्यबिंदुकंठंत्वलंकृतम् ॥ तद्बाह्यपंक्तित्रितयेपूर्वादिपरितःक्रमात् ॥ २१ ॥ कोष्ठानिपंचगृण्ही याद्गिरिराजसुतेशुभे ॥ मध्यंतुकर्णिकांकुर्यात्पीतांरक्तंचवृत्तकम् ॥ २२ ॥ दलानिरक्तवर्णानिकल्पयेत्कल्पवित्त मः ॥ दलबाह्येतुकृष्णेनरंध्राणिपरिपूरयेत् ॥ २३ ॥ आग्नेयादीनिचत्वारिशुक्लेनैवप्रपूरयेत् ॥ पूर्वेषड्बिंदुसहितंष ट्कोणंकृष्णमालिखेत् ॥ २४ ॥ रक्तवर्णंदक्षिणतस्त्रिकोणंचोत्तरेततः ॥ श्वेताभमर्धचंद्रंचपीतवर्णंचपश्चिमे ॥ २५ ॥ चतुरस्रंक्रमात्तेषुलिखेद्बीजचतुष्टयं ॥ पूर्वेबिंदुंसमालिख्यशुभ्रंकृष्णंतुदक्षिणे ॥ २६ ॥ उकारमुत्तरेरक्तंमकारंपश्चि मेततः ॥ अकारंपीतमेवंतुकृत्वावर्णचतुष्टयम् ॥ २७ ॥ सर्वोर्ध्वपंक्त्यधःपंक्तौसमारभ्यचसुंदरि ॥ पीतंश्वेतंचरक्तंचकृ ष्णंचेतिचतुष्टयम् ॥ २८ ॥ तदधोधवलंश्यामंपीतंरक्तंचतुष्टयम् ॥ अधस्त्रिकोणकेरक्तंशुक्लंपीतंवरानने ॥ २९ ॥ एवंदक्षिणमारभ्यकुर्यात्सोमांतमीश्वरि ॥ तद्बाह्यपंक्तौपूर्वादिमध्यमात्रंविचित्रयेत् ॥ ३० ॥ पीतंरक्तंचकृष्णंचश्या मंश्वेतंचपीतकम् ॥ आग्नेय्यादिसमारभ्यरक्तंश्यामंसितंप्रिये ॥ ३१ ॥ रक्तंकृष्णंचरक्तंचषट्कमेवंप्रकीर्तितम् ॥ द क्षिणाद्यंमहेशानिपूर्वावधिसमीरितम् ॥ ३२ ॥ नैर्ऋताद्यंतुविज्ञेयमाग्नेयावधिचेश्वरि ॥ वारुणंतुसमारभ्यदक्षिणा वधिचेरितम् ॥ ३३ ॥ वायव्याद्यंमहादेविनैर्ऋतावधिचेरितम् ॥ सोमाद्यंपरमेशानिवारुणावधिचेरितम् ॥ ईशाना द्यंतुविज्ञेयंवायव्यावधिचांबिके ॥ ३४ ॥ एवंमंडलमालिख्यनियतात्मायतिःस्मृतः ॥ सौरपूजांप्रकुर्वीतसखलुब्र ह्मतत्परः ॥ ३५ ॥ इतिश्रीशिवमहापुराणेकैलाससंहितायामुत्तरभागेचतुर्थोऽध्यायः ॥ ४ ॥ छ ॥ ईश्वरउवाच ॥ दक्षिणेमंडलस्याथवैय्याघ्रंचर्मशोभनम् ॥ आस्तीर्यशुद्धतोयेनप्रोक्षयेदस्त्रमंत्रतः ॥ १ ॥ ॥

॥ २८ ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ इतिश्रीशैवमहापुराणकैलाससंहिताटीकायांसारबोधिन्यामुत्तरभागेचतुर्थोध्यायः ॥ ४ ॥
ओंनमःशिवाय ॥ पुनश्चप्रणवोद्धारपूर्वविविधपूजनं ॥ विधिर्न्यासांतरादेश्चपंचमेत्रनिरूप्यते ॥ १ ॥ वैयाघ्रंव्याघ्रसंबंधि ॥ १ ॥ ॥

नमोंतकंशक्तिकमलायनमइति ॥ २ ॥ तस्मिन्वैयाघ्रचर्मणि ॥ ३ ॥ ४ ॥ आप्तर्च्योमिति ॥ अनेनमंत्रेणेत्यर्थः ॥ साधारंसपीठं ॥ ५ ॥ ६ ॥ तस्मिन् शंखे ॥ तेनैवप्रणवेनैव ॥ ७ ॥ आत्मानमिति ॥ आत्मानंस्वंगंधपुष्पादिपूजोपकरणानिचअस्त्रमंत्रतःअस्त्रमंत्रेणप्रोक्षयेदितिपूर्वेणान्वयः ॥ ८ ॥ ९ ॥

प्रणवंपूर्वमुत्धृत्यपश्चादाधारमुद्धरेत् ॥ तत्पश्चाच्छक्तिकमलंचतुर्थ्यंतंनमोंतकम् ॥ २ ॥ मनुमेनंसमुच्चार्यस्थित्वातास्मिन्नुदङ्मुखः ॥ प्राणानायम्यविधिवत्प्रणवोच्चारपूर्वकम् ॥ ३ ॥ अग्निरित्यादिभिर्मंत्रैर्भस्मसंधारयेत्ततः ॥ शिरसिश्रीगुरुंनत्वामंडलंरचयेत्पुनः ॥ ४ ॥ त्रिकोणंवृत्तंबाह्येतुचतुरस्त्रांतकंक्रमात् ॥ आप्तर्च्योमितिसाधारंस्थाप्यशंखंसमर्चयेत् ॥ ५ ॥ आपूर्यशुद्धतोयेनप्रणवेनसुगंधिना ॥ अभ्यर्च्यगंधपुष्पाद्यैःप्रणवेनचसप्तधा ॥ ६ ॥ अभिमंत्र्यततस्तस्मिन्धेनुमुद्रांतुदर्शयेत् ॥ शंखमुद्रांतुतेनैवप्रोक्षयेदस्त्रमंत्रतः ॥ ७ ॥ आत्मानंगंधपुष्पादिपूजोपकरणानिच ॥ प्राणायामत्रयंकृत्वाऋष्यादिकमथाचरेत् ॥ ८ ॥ अस्यश्रीसौरमंत्रस्यदेवभागऋषिस्ततः ॥ छंदोगायत्रमित्युक्तंदेवःसूर्यमहेश्वरः ॥ ९ ॥ देवतास्यात्षडंगानिन्हामित्यादीनिविन्यसेत् ॥ ततःसंप्रोक्षयेत्पद्ममस्त्रेणाग्नेयगोचरम् ॥ ॥ १० ॥ तस्मिन्समर्चयेद्विद्वान्प्रभूतांविमलामपि ॥ सारांचाथसमाराध्यपूर्वादिपरितःक्रमात् ॥ ११ ॥ अथकालाग्निरुद्रंचशक्तिमाधारसंज्ञिताम् ॥ अनंतंपृथिवींचैवरत्नद्वीपंतथैवच ॥ १२ ॥ संकल्पवृक्षोद्यानंचगृहंमणिमयंततः ॥ रक्तपीठंचसंपूज्यपादेषुप्रागुपक्रमात् ॥ १३ ॥ धर्मज्ञानंचवैराग्यमैश्वर्यंचचतुष्टयम् ॥ अधर्माद्यग्निकोणादिकोणेषुचसमर्चयेत् ॥ १४ ॥ मायाधश्छदनंपश्चाद्विद्योर्ध्वच्छदनंततः ॥ सत्वंरजस्तमश्चैवसमभ्यर्च्ययथाक्रमं ॥ ॥ १५ ॥ पूर्वादिदिक्षुमध्येचदीप्तांसूक्ष्मांजयामपि ॥ भद्रांविभूतिंविमलाममोघांवैद्युतामपि ॥ १६ ॥ सर्वतोमुखसंज्ञांचकंदंनालंतथैवच ॥ सुषिरंचततस्तंतुकंटकांस्तदनंतरम् ॥ १७ ॥ मूलच्छदनकिंजल्कप्रकाशसकलात्मनः ॥ पंचग्रंथिकर्णिकांचदलानितदनंतरे ॥ १८ ॥ ॥ ॥ ॥ ॥

न्हामित्यादीनीति ॥ न्हांन्हींन्हूंइत्यादिभिरित्यर्थः ॥ अस्त्रेणअस्त्रमंत्रेणआग्नेयगोचरंआग्नेयकोणस्थमंडलस्थं ॥ १० ॥ तस्मिन्आग्नेयगोचरेपद्मे ॥ ११ ॥ ॥ १२ ॥ १३ ॥ अधर्मादीति ॥ आदिनाअज्ञानादि ॥ १४ ॥ मायेति ॥ माययाअधोभागेछदनमाच्छादनं ॥ एवमग्रेपि ॥ १५ ॥ १६ ॥ १७ ॥ मूलच्छदनेतितंतुकंटकानांविशेषणं ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ज्ञानात्मपरमात्मनिज्ञानस्वरूपेपरमात्मनि ॥ १९ ॥ मूलेनमूलमंत्रेण ॥ २० ॥ शक्तिमाधारशक्तिं॥ ततस्तदातेनमूलेन॥प्रभावादिति ॥ क्वचित्प्रभावदितिपाठः ॥ पिंगलाध्वनापिंगलानाड्या ॥ २१ ॥ निर्गमय्येति ॥ शक्तिमितिसंबध्यते ॥ २२ ॥ २३ ॥ हृत्पंकजोदरेस्थितस्येतिशेषः ॥ २४ ॥ २५ ॥

केसरान्ब्रह्मविष्णूचरुद्रमात्मानमेवच ॥ अंतरात्मानमपिचज्ञानात्मपरमात्मनि ॥ १९ ॥ संपूज्यपश्चात्सौराख्यंयोगपीठंसमर्चयेत् ॥ पीठोपरिसमाकल्प्यमूर्तिंमूलेनमूलवित् ॥ २० ॥ निरुद्धप्राणआसीनोमूलेनैवस्वमूलतः ॥ शक्तिमुत्थाप्यतत्तेनप्रभावात्पिंगलाध्वना ॥ २१ ॥ पुष्पांजलौनिर्गमय्यमंडलस्थस्यभास्वतः ॥ सिंदूरारुणदेहस्यवामार्धदयितस्यच ॥ २२ ॥ अक्षस्रक्पाशखट्वांगकपालांकुशपंकजं ॥ शंखचक्रंदधानस्यचतुर्वक्रस्यलोचनैः ॥ २३ ॥ राजितस्यद्वादशभिस्तस्यत्वहृत्पंकजोदरे ॥ प्रणवंपूर्वमुद्धृत्यन्हांन्हींसस्तदनंतरम् ॥ २४ ॥ प्रकाशशक्तिसहितंमार्तंडंचततःपरम् ॥ आवाहयामिनमइत्यावाह्यावाहनाख्यया ॥ २५ ॥ मुद्रयास्थापनाद्याश्चमुद्राःसंदर्शयेक्रमात् ॥ विन्यस्यांगानिन्हांन्हींन्हूमंतेनमनुनाततः ॥ २६ ॥ पंचोपचारान्संकल्प्यमूलेनाभ्यर्चयेत्त्रिधा ॥ केसरेषुचपद्मस्यषडंगानिमहेश्वरि ॥ २७ ॥ वन्हीशरक्षोवाय्वश्चपरितःक्रमशःसुधीः ॥ द्वितीयावरणेपूज्याश्चतस्त्रोमूर्तयःक्रमात् ॥२८॥ पूर्वाद्युत्तरपर्यंतंदलमूलेषुपार्वति ॥ आदित्योभास्करोभानूरविश्चेत्यनुपूर्वशः ॥२९॥ अर्कोब्रह्मातथारुद्रोविष्णुश्चेतिपुनःप्रिये ॥ ईशानादिषुसंपूज्यास्तृतीयावरणेपुनः ॥ ३० ॥ सोममंगारकंचैवबुधंबुद्धिमतांवरम् ॥ बृहस्पतिंबृहद्बुद्धिंभार्गवंतेजसांनिधिम् ॥ ३१ ॥ शनैश्चरंतथाराहुंकेतुंशत्रुभयंकरम् ॥ समंततोयजेदेतान्पूर्वादिदलमध्यतः ॥ ॥ ३२ ॥ अथवाद्वादशादित्यान्द्वितीयावरणेयजेत् ॥ तृतीयावरणेचैवशश्यादीनेवपूजयेत् ॥३३॥ सप्तसागरगंगाश्चबहिरस्यसमंततः ॥ ऋषीन्देवांश्चगंधर्वान्पन्नगानप्सरोगणान् ॥ ३४ ॥ ग्रामण्यश्चतथायक्षान्यातुधानांस्तथाहयान् ॥ सप्तच्छंदोमयांश्चैववालखिल्यांश्चपूजयेत् ॥ ३५ ॥ एवंत्र्यावरणंदेवंसमभ्यर्च्यदिवाकरम् ॥ विलिख्यमंडलंपश्चाच्चतुरस्त्रंसमाहितः ॥ ३६ ॥ ॥ ॥ ॥ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ शश्यादीन्सोमांगारकप्रभृतीन् ॥ ३३ ॥ ३४ ॥ हयान्सप्तच्छंदोमयान्सूर्यहयान् ॥ ३५ ॥ ३६ ॥

प्रस्थोदविस्तृतंप्रस्थपरिमितोदकधारणयोग्यंविस्तृतं ॥ ३७ ॥ ३८ ॥ सावित्रमंत्रमाह ॥ सिंदूरेति ॥ सुवज्राभरणायशोभनहीरकमयभूषणाय ॥ ३९ ॥ ॥ ४० ॥ नमस्कुर्यादिति ॥ अमुंवक्ष्यमाणंमंत्रंपठित्वानमस्कुर्यादित्यन्वयः ॥ ४१ ॥ तमेवमंत्रमाह॥नमइति ॥ ४२ ॥ ४३ ॥ ४४ ॥ प्रणवमिति ॥ संयुक्तमत्रीशमितिपाठः ॥ ओंश्रीगुरवेनमइत्युच्चार्यशिरसाश्रीगुरुंप्रणमेदित्यन्वयः ॥ ४५ ॥ पंचात्मकंपंचवर्णात्मकं ॥ पंचमस्वरउकारः ॥ ४६ ॥

स्थाप्यसाधारकंताम्रपात्रंप्रस्थोदविस्तृतम् ॥ पूरयित्वाजलैःशुद्धैर्वासितैःकुसुमादिभिः ॥ ३७ ॥ अभ्यर्च्यगंधपुष्पाद्यैर्जानुभ्यामवनींगतः ॥ अर्घ्यपात्रंसमादायभूमध्यांतंसमुद्धरेत् ॥ ततोब्रूयादिमंमंत्रंसावित्रंसर्वसिद्धिदम् ॥ ॥ ३८ ॥ सिंदूरवर्णायसुमंडलायनमःसुवज्राभरणायतुभ्यं ॥ पद्माभनेत्रायसुपंकजायब्रह्मेंद्रनारायणकारणाय ॥ ॥ ३९ ॥ सरक्तचूर्णंससुवर्णतोयंस्त्रक्कुंकुमाढ्यंसकुशंसपुष्पम् ॥ प्रदत्तमादायसहेमपात्रंप्रशस्तमर्घ्यंभगवन्प्रसीद॥ ॥ ४० ॥ एवमुक्त्वाततोदत्वातदर्घ्यंसूर्यमूर्तये ॥ नमस्कुर्यादमुंमंत्रंपठित्वातुसमाहितः ॥ ४१ ॥ नमःशिवायसांबायसगणायादिहेतवे ॥ रुद्रायविष्णवेतुभ्यंब्रह्मणेसूर्यमूर्तये ॥ ४२ ॥ एवमुक्त्वानमस्कृत्यस्वासनेसमुपस्थितः ॥ ऋष्यादिकंपुनःकृत्वाकरंसंशोध्यवारिणा ॥ ४३ ॥ पुनश्चभस्मसंधार्यपूर्वोक्तेनैववर्त्मना ॥ न्यासजातंप्रकुर्वीतशिवभावविवृद्धये ॥ ४४ ॥ पंचोपचारैःसंपूज्यशिरसाश्रीगुरुंबुधः ॥ प्रणवंश्रीचतुर्थ्यंतंनमोंतंप्रणमेत्ततः ॥ ४५ ॥ पंचात्मकंबिंदुयुतंपंचमस्वरसंयुतम् ॥ तदेवबिंदुसहितंपंचमस्वरवर्जितम् ॥४६॥ पंचमस्वरसंयुक्तंमंत्रीशंचसबिंदुकम् ॥ उद्धृत्यबिंदुसहितंसंवर्तकमथोच्चरेत् ॥ ४७ ॥ एतैरेवंक्रमाद्बीजैरुध्धृतैःप्रणमेद्बुधः ॥भुजयोरूरुयुग्मेचगुरुंगणपतिंतथा॥ ॥ ४८ ॥ दुर्गांचक्षेत्रपालंचबद्धांजलिपुटःस्वयम् ॥ ओमस्त्रायफडित्युक्त्वाकरौसंशोध्यपट्क्रमात् ॥ ४९ ॥ अपसर्पैतितिप्रोच्यप्रणवंतदनंतरम् ॥ अस्त्रायफडितिप्रोच्यपार्ष्णिघातत्रयेणतु ॥ ५० ॥ उद्वास्यविघ्नान्भूमिष्ठान्करतालत्रयेणतु ॥ अंतरिक्षगतान्दृष्ट्वाविलोक्यदिविसंस्थितान् ॥ ५१ ॥ ॥ ॥ ॥

संवर्तकःक्षकारः ॥ ४७ ॥ एतैरिति ॥ एतैश्चतुर्भिः ॥ श्लोकार्धैरुक्तैर्बीजैःक्रमात्भुजयोर्गुरुंगणपतिमूरुयुग्मेचदुर्गांक्षेत्रपालंचप्रणमेदित्यन्वयः ॥ ४८ ॥ पट्क्रमात्षडंगन्यासक्रमादोमस्त्रायफडित्युक्त्वाकरौसंशोध्येत्यन्वयः ॥ ४९ ॥ पार्ष्णीति ॥ भूमौपार्ष्णिघातत्रयेणभूमिष्ठान्विघ्नानुद्वास्येतिसंबंधः ॥ ॥ ५० ॥ करतालेति ॥ करतालत्रयेणअंतरिक्षगतान्विघ्नान्दृष्ट्वातथादिविसंस्थितान्विघ्नान्विलोक्यउद्वास्येतिसंबंधः ॥ ५१ ॥

हंसमंत्रंसोहंसोहमित्याकारकमनुस्मरन्सन्हृदिस्थंजीवचैतन्यंब्रह्मनाड्यासुषुम्नयावक्ष्यमाणलक्षणंपरमेश्वरंसमानयेदित्यन्वयः ॥ ५२ ॥ चिच्चंद्रेति ॥ चिदात्मकचंद्रमंडलांतस्थाचिद्रूपमित्यर्थः ॥ ५३ ॥ शोषदाहेति ॥ भूतशुद्धिविधिनेतिशेषः ॥ ५४ ॥ वाय्वग्नीति ॥ वाय्वग्निसलिलानामर्णैःक्रमेणषोडशचतुःषष्टिद्वात्रिंशत्संख्यायुतैरकारादिभिर्वर्णैःस्ववेदादिमंत्रैश्चप्राणप्रतिष्ठांकुर्यादित्यर्थः ॥ ५५ ॥ अंतांमातृकांप्रणवेनपुटितांसंपुटितां ॥ मातृकांपूर्वोक्तांवा

निरुद्धप्राणआसीनोहंसमंत्रमनुस्मरन् ॥ हृदिस्थंजीवचैतन्यंब्रह्मनाड्यासमानयेत् ॥ ५२ ॥ द्वादशांतस्थविशदसहस्रारमहांबुजे ॥ चिच्चंद्रमंडलांतस्थचिद्रूपंपरमेश्वरम् ॥ ५३ ॥ शोषदाहप्लवान्कुर्याद्रेचकादिक्रमेणतु ॥ सषोडशचतुःषष्टिद्वात्रिंशद्गणनायुतैः ॥ ५४ ॥ वाय्वग्निसलिलार्णैस्तैःस्ववेदाद्यैरनुक्रमात् ॥ प्राणप्रतिष्ठांविधिवत्कुर्यादत्रसमाहितः ॥ ५५ ॥ एकाग्रमानसोयोगीविमृश्यांतांचमातृकाम् ॥ पुटितांप्रणवेनाथन्यसेद्बाह्येचमातृकाम् ॥५६॥ पुनश्चसंयतप्राणःकुर्याद्दृष्यादिकंबुधः ॥ प्रणवस्यऋषिर्ब्रह्मादेविगायत्रमीरितम् ॥ ५७ ॥ छंदोत्रदेवताहंवैपरमात्मासदाशिवः ॥ अकारोबीजमाख्यातमुकारःशक्तिरुच्यते ॥ ५८ ॥ मकारःकीलकंप्रोक्तंमोक्षार्थेविनियुज्यते ॥ अंगुष्ठद्वयमारभ्यतलांतंपरिमार्जयेत् ॥ ५९ ॥ ओमित्युक्त्वाथदेवेशिकरन्याससंसमारभेत् ॥ दक्षहस्तस्थितांगुष्ठंसमारभ्ययथाक्रमम् ॥ ६० ॥ वामहस्तकनिष्ठांतंविन्यसेन्नवसुक्रमात् ॥ अकारमप्युकारंचमकारंबिंदुसंयुतं ॥ ६१ ॥ नमोंतंप्रोच्यसर्वत्रहृदयादौन्यसेदथ ॥ अकारंपूर्वमुद्धृत्यब्रह्मात्मानमथोच्चरेत् ॥ ६२ ॥ ङेंतंनमोंतंत्वहृदयेविनियुज्यात्तथापुनः ॥ उकारंविष्णुसहितंशिरोदेशेप्रविन्यसेत् ॥ ६३ ॥ मकारंरुद्रसहितंशिखायांतुप्रविन्यसेत् ॥ एवमुक्त्वामुनिर्मंत्रीकवचंनेत्रमस्त्रकम् ॥ ६४ ॥ विन्यसेद्देवदेवेशिसावधानेनचेतसा ॥ अंगवक्त्रकलाभेदात्पंचब्रह्माणिविन्यसेत् ॥ ६५ ॥ ॥ ॥ ॥ ॥ ॥

ह्येवांहिर्भागेन्यसेदित्यन्वयः ॥५६॥ ५७ ॥ ५८ ॥ परिमार्जयेच्छोधयेत् ॥५९॥६०॥ नवसुदक्षिणहस्ततर्जन्यादिषु ॥ पर्वसुक्रममितिपाठांतरम् ॥६१॥ ॥ ६२ ॥ ङेंतंचतुर्थ्येकवचनांतंनमोंतंअंब्रह्मात्मनेनमइत्याकारकं ॥ एवमग्रेपि ॥६३॥ एवमुक्त्वेति ॥ अंब्रह्मात्मनेनमइत्यादिकंक्रमेणोक्त्वाकवचादिंप्रविन्यसेदित्यर्थः ॥६४॥ अंगेति ॥ अंगवक्त्रकलाभेदाद्वक्ष्यमाणप्रकारेणसावधानेनचेतसाविन्यसेदित्यन्वयः ॥ तमेवविन्यासप्रकारमाह ॥ पंचेति ॥६५॥

एतानिपूर्वोक्तानिईशानादीनि ॥ कलान्यासमाह ॥ ईशानस्येति ॥ एतेषुशिरआदिषु ॥ ६६ ॥ चतुर्ष्विति ॥ पूर्वादिक्रमयोगतश्चतुर्षुवक्रेषुचतस्रःपुरुष स्यकलाःप्रणिधातव्याइत्यन्वयः ॥ ६७ ॥ ६८ ॥ भावयेदिति ॥ यथाक्रममितिसंबध्यते ॥ ६९ ॥ प्राणेहृदयस्थाने ॥ ७० ॥ ७१ ॥ पार्श्वयोरुदरेजं घयोश्चेत्यर्थः॥पार्श्वतोदरजंघेष्विति ॥ आर्षोयंप्रयोगः ॥ ७२ ॥ परमात्मप्रबोधिनिहेगौरि ॥ ७३ ॥ इतिश्रीशैवमहापुराणकैलाससंहिताटीकायांसारबोधि

शिरोवदनहृद्गुह्यपादेष्वेतानिविन्यसेत् ॥ ईशानस्यकलाःपंचपंचस्वेतेषुचक्रमात् ॥ ६६ ॥ ततश्चतुर्षुवक्रेषुपुरुषस्यक लाअपि ॥ चतस्रःप्रणिधातव्याःपूर्वादिक्रमयोगतः ॥ ६७ ॥ हृत्कंठांसेषुनाभौचकुक्षौपृष्ठेचवक्षसि ॥ अघोरस्यक लाश्चाष्टौपूजनीयायथाक्रमम् ॥ ६८ ॥ पश्चात्त्रयोदशकलाःपायुमेढ्रोरुजानुषु ॥ जंघास्फिक्कटिपार्श्वेषुवामदेवस्यभा वयेत् ॥ ६९ ॥ सद्यस्यापिकलाह्यष्टौपादयोरपिहस्तयोः ॥ प्राणेशिरसिबाह्वोश्चकल्पयेत्कल्पवित्तमः ॥ ७० ॥ अष्टत्रिंशत्कलान्यासमेवंकृत्वातुसर्वशः ॥ पश्चात्प्रणवविद्धीमान्प्रणवन्यासमाचरेत् ॥ ७१ ॥ बाहुद्वयेकूर्परयोस्तथा त्रमणिबंधयोः ॥ पार्श्वतोदरजंघेषुपादयोःपृष्ठतस्तथा ॥ ७२ ॥ इत्थंप्रणवविन्यासंकृत्वान्यासविचक्षणः ॥ हंसन्या संप्रकुर्वीतपरमात्मप्रबोधिनि ॥ ७३ ॥ इतिश्रीशिवमहापुराणेकैलाससंहितायामुत्तरभागेपंचमोऽध्यायः ॥ ५ ॥ ईश्वरउवाच ॥ स्ववामेचतुरस्रंतुमंडलंपरिकल्पयेत् ॥ ओमित्यभ्यर्च्यतस्मिंस्तुशंखमस्त्रोपशोधितम् ॥ १ ॥ स्थाप्य साधारकंतंतुप्रणवेनार्चयेत्ततः ॥ आपूर्यशुद्धतोयेनचंदनादिसुगंधिना ॥ २ ॥ अभ्यर्च्यगंधपुष्पाद्यैःप्रणवेनचसप्त धा ॥ अभिमंत्र्यततस्तस्मिन्धेनुमुद्रांप्रदर्शयेत् ॥ ३ ॥ शंखमुद्रांचपुरतश्चतुरस्रंप्रकल्पयेत् ॥ तदंतरेर्धचंद्रंचत्रिको णंचतदंतरे ॥ ४ ॥ षट्कोणवृत्तमेवेदंमंडलंपरिकल्पयेत् ॥ अभ्यर्च्यगंधपुष्पाद्यैःप्रणवेनाथमध्यतः ॥ ५ ॥ साधा रमर्घ्यपात्रंचस्थाप्यगंधादिनार्चयेत् ॥ आपूर्यशुद्धतोयेनतस्मिन्पात्रेविनिक्षिपेत् ॥ ६ ॥ ॥

न्यामुत्तरभागेपंचमोध्यायः ॥ ५ ॥ ॐनमःशिवाय ॥ कृत्वातुशंखपूजाद्यंगुर्वादीनर्चयेत्ततः ॥ पूजयेत्सगणंशंभुमेवंषष्ठेत्रवर्ण्यते ॥ १ ॥ स्ववामेस्वस्य वामभागेअस्त्रोपशोधितंअस्त्रमंत्रेणशोधितं ॥ १ ॥ चंदनादिसुगंधिनाद्रव्येण ॥ २ ॥ तस्मिन्शंखे ॥ ३ ॥ ४ ॥ षट्कोणेति ॥ तदंतरइतिसंबध्यते ॥ ५ ॥ ६ ॥

कुशाग्राणीति ॥ कुशाग्रादीनितास्मिन्नर्घ्यपात्रेविनिक्षिपेदितिपूर्वत्रान्वयः ॥ सिद्धार्थाःश्वेतसर्षपाःभसितंभस्म ॥ ७ ॥ वर्मणाकवचमंत्रेण ॥ ८ ॥ संरक्षायेति ॥ तेनैवास्त्रमंत्रेणैवसंरक्षायसंरक्षणार्थंधेनुमुद्रांप्रदर्शयेदित्यन्वयः ॥ ९ ॥ स्वात्मानमिति ॥ स्वात्मानंगंधादीनिचास्त्रमंत्रेणप्रोक्षयेदितिसंबंध ॥ १० ॥

कुशाग्राण्यक्षतांश्चैवयवव्रीहितिलानपि ॥ आज्यसिद्धार्थपुष्पाणिभसितंचवरानने ॥ ७ ॥ सद्योजातादिभिर्मंत्रैःषडंगैःप्रणवेनच ॥ अभ्यर्च्यगंधपुष्पाद्यैरभिमंत्र्यचवर्मणा ॥ ८ ॥ अवगुंठ्यास्त्रमंत्रेणसंरक्षायप्रदर्शयेत् ॥ धेनुमुद्रांचतेनैवप्रोक्षयेदस्त्रमंत्रतः ॥ ९ ॥ स्वात्मानंगंधपुष्पादिपूजोपकरणान्यपि ॥ पद्मस्येशानदिक्पद्मेप्रणवोच्चारपूर्वकम् ॥ ॥ १० ॥ गुर्वासनायनमइत्यासनंपरिकल्पयेत् ॥ गुरोर्मूर्तिंचतत्रैवकल्पयेदुपदेशतः ॥ ११ ॥ प्रणवंगुंगुरुभ्योंतेनमःप्रोच्याथदेशिकम् ॥ समाहूयततोध्यायेद्दक्षिणाभिमुखंस्थितम् ॥ १२ ॥ सुप्रसन्नमुखंसौम्यंशुद्धस्फटिकनिर्मलम् ॥ वरदाभयहस्तंचद्विनेत्रंशिवविग्रहम् ॥ १३ ॥ एवंध्यात्वायजेद्गंधपुष्पादिभिरनुक्रमात् ॥ पद्मस्यनैर्ऋतेपद्मेगणपस्यासनोपरि ॥ १४ ॥ मूर्तिंप्रकल्प्यतत्रैवगणानांत्वेतिमंत्रतः ॥ समावाह्यततोदेवंध्यायेदेकाग्रमानसः ॥ १५ ॥ रक्तवर्णमहाकायंसर्वाभरणभूषितम् ॥ पाशांकुशेष्टदशनान्दधानंकरपंकजैः ॥ १६ ॥ गजाननंप्रभुंसर्वविघ्नौघास्त्रमुपासितुः ॥ एवंध्यात्वायजेद्गंधपुष्पाद्यैरुपचारकैः ॥ १७ ॥ कदलीनारिकेलाम्रफललड्डुकपूर्वकम् ॥ नैवेद्यंचसमर्प्याथनमस्कृत्यगजाननम् ॥ १८ ॥ पद्मस्यवायुदिक्पद्मेसंकल्प्यस्कांदमासनम् ॥ स्कंदमूर्तिंप्रकल्प्याथस्कंदमावाहयेद्बुधः ॥ १९ ॥ उच्चार्यस्कंदगायत्रींध्यायेदादौकुमारकम् ॥ उद्यदादित्यसंकाशंमयूरवरवाहनं ॥ २० ॥ चतुर्भुजमुदारांगंमुकुटादिविभूषितम् ॥ वरदाभयहस्तंचशक्तिकुक्कुटधारिणम् ॥ २१ ॥ एवंध्यात्वाथगंधाद्यैरुपचारैरनुक्रमात् ॥ संपूज्यपूर्वद्वारस्यदक्षशाखामुपाश्रितम् ॥ २२ ॥ ॥ ॥ ॥

उपदेशतःगुरूपदेशानुसारेण ॥ ११ ॥ देशिकंगुरुं ॥ १२ ॥ १३ ॥ १४ ॥ देवंगणपतिं ॥ १५ ॥ १६ ॥ सर्वेति ॥ उपासितुःसर्वविघ्नौघानांनाशकत्वेनास्त्ररूपमित्यर्थः ॥ १७ ॥ १८ ॥ संकल्प्यप्रकल्प्य ॥ १९ ॥ स्कंदगायत्रीमिति ॥ साचतत्पुरुषायविद्महेमहासेनायधीमहि ॥ तन्नःषण्मुखःप्रचोदयादितिनारायणीयोपनिषदिप्रसिद्धा ॥ २० ॥ २१ ॥ दक्षशाखांदक्षिणशाखां ॥ २२ ॥ ॥ ॥ ॥

चामीकरंसुवर्णं ॥ २३ ॥ २४ ॥ हरिवक्त्रंसिंहवदुग्रमुखं ॥ तस्यनंदिनः ॥ २५ ॥ सुयशामेतन्नाम्नींपादमंडनतत्परांपतिचरणसेवातत्परां ॥ २६ ॥ सास्त्रेति ॥ अस्त्रमंत्रसहितैःशंखोदकबिंदुभिरित्यर्थः ॥ २७ ॥ उत्कंठमूर्ध्वकंठं ॥ २८ ॥ तस्यअनंतस्य ॥ कंठीरवचतुष्पदंसिंहसमानाकारपादचतुष्कयुक्तं ॥ तान्येवपदान्याह ॥ धर्मइति ॥ २९ ॥ तेषांस्थानानिवर्णांश्चाह ॥ आग्नेय्यादीति ॥ अधर्मादीनीति ॥ आदिनाअज्ञानावैराग्यानैश्वर्याणि ॥ ३० ॥

अंतःपुराधिपंसाक्षान्नंदिनंसम्यगर्चयेत् ॥ चामीकराचलप्रख्यंसर्वाभरणभूषितम् ॥ २३ ॥ बालेंदुमुकुटंसौम्यंत्रिनेत्रंचचतुर्भुजं ॥ दीप्तशूलमृगीटंकहेमवेत्रधरंविभुम् ॥ २४ ॥ चंद्रबिंबाभवदनंहरिवक्त्रमथापिवा ॥ उत्तरस्यांतथातस्यभार्यांचमरुतांसुताम् ॥ २५ ॥ सुयशांसुव्रतामंबांपादमंडनतत्पराम् ॥ संपूज्यविधिवद्गंधपुष्पाद्यैरुपचारकैः ॥ ॥ २६ ॥ ततःसंप्रोक्षयेत्पद्मंसास्त्रशंखोदबिंदुभिः ॥ कल्पयेदासनंपश्चादाधारादियथाक्रमम् ॥ २७ ॥ आधारशक्तिंकल्याणींश्यामांध्यायेदधोभुवि ॥ तस्याःपुरस्तादुत्कंठमनंतंकुंडलाकृतिं ॥ २८ ॥ धवलंपंचफणिनंलेलिहानाभिवांबरम् ॥ तस्योपर्यासनंभद्रंकंठीरवचतुष्पदम् ॥ धर्मोज्ञानंचवैराग्यमैश्वर्यंचपदानिवै ॥ २९ ॥ आग्नेय्यादिश्वेतपीतरक्तश्यामानिवर्णतः ॥ अधर्मादीनिपूर्वादीन्युत्तरांतान्यनुक्रमात् ॥ ३० ॥ राजावर्तमणिप्रख्यान्यस्यगात्राणिभावयेत् ॥ अधोर्ध्वच्छदनंपश्चात्स्कंदंनालंचकंटकान् ॥ ३१ ॥ दलादिकंकर्णिकांचविभाव्यक्रमशोऽर्चयेत् ॥ दलेषुसिद्धयःकल्प्याःकेसरेषुसशक्तिकाः ॥ ३२ ॥ रुद्रावामादयस्त्वष्टौपूर्वादिपरितःक्रमात् ॥ कर्णिकायांचवैराग्यंबीजेषुनवशक्तयः ॥ ३३ ॥ वामाद्याएवपूर्वादितदंतश्चमनोन्मनी ॥ कंदेशिवात्मकोधर्मोनालेज्ञानंशिवाश्रयम् ॥ ३४ ॥ कर्णिकोपरिवान्हेयंमंडलंसौरमैंदवम् ॥ आत्मविद्याशिवाख्यंचतत्त्वत्रयमतःपरम् ॥ ३५ ॥ सर्वासनोपरिसुखंविचित्रकुसुमोज्वलम् ॥ परव्योमावकाशाख्यविद्ययातीवभास्वरम् ॥ ३६ ॥ परिकल्प्यासनमूर्तिंपुष्पविन्यासपूर्वकम् ॥ आधारशक्तिमारभ्यशुद्धविद्यासनावधि ॥ ३७ ॥ ओंकारादिचतुर्थ्यंतंनाममंत्रंनमोंतकं ॥ उच्चार्यपूजयेद्विद्वान्सर्वत्रैवंविधिक्रमः ॥ ३८ ॥ ॥ ॥ ॥ ॥

राजावर्तमणिरुपरत्नभेदः ॥ अस्यअनंतस्य ॥ अधोर्ध्वच्छदनमित्यत्र ॥ संधिरार्षः ॥ पद्मस्येतिशेषः ॥ ३१ ॥ ३२ ॥ रुद्राइति ॥ वामादयोरुद्रावामाद्याःशक्तयश्चवायुसंहितायामुक्ताः ॥ ३३ ॥ तदंतःपद्मस्यांतः ॥ ३४ ॥ आत्मेति ॥ आत्मांतरात्माविद्याज्ञानंशिवोत्रब्रह्मएतदात्मकंतत्वत्रयं ॥ ३५ ॥ परव्योमावकाशाख्यविद्ययादहरविद्यया ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३९ ॥ ओमंतंशिवोमेअस्तुसदाशिवोमित्यंतं ॥ ४० ॥ आधारेति ॥ मूलाधारादुत्थितंनादंद्दादशचक्रग्रंथीन्भित्वाब्रह्मरंध्रांतमुच्चार्योंकारगोचरमभ्विरं



अंगवक्त्रकलाभेदात्पंचब्रह्माणिपूर्ववत् ॥ विन्यसेत्क्रमशोमूर्तौतत्तन्मुद्राविचक्षणः ॥ ३९ ॥ आवाहयेत्ततोदेवान्पु
ष्पांजलिपुटस्थितः ॥ सद्योजातंप्रपद्यामीत्यारभ्योमंतमुच्चरन् ॥ ४० ॥ आधारोत्थितनादंतुद्वादशग्रंथिभेदतः॥
ब्रह्मरंध्रांतमुच्चार्यध्यायेदोंकारगोचरम् ॥ ४१ ॥ शुद्धस्फटिकसंकाशंदेवंनिष्कलमक्षरम् ॥ कारणंसर्वलोकानांसर्व
लोकमयंपरम् ॥ ४२ ॥ अंतर्बहिस्थितंव्याप्यमणोरणुमहत्तरम् ॥ भक्तानामप्रयत्नेनदृश्यमीश्वरमव्ययम् ॥४३॥
ब्रह्मेंद्रविष्णुरुद्राद्यैरपिदेवैरगोचरम् ॥ वेदसारंचविद्वद्भिरगोचरमितिश्रुतम् ॥ ४४ ॥ आदिमध्यांतरहितंभेषजंभ
वरोगिणाम् ॥ समाहितेनमनसाध्यात्वैवंपरमेश्वरम् ॥ ४५ ॥ आवाहनंस्थापनंचसंनिरोधंनिरीक्षणम् ॥ नमस्कारं
चकुर्वीतबध्वामुद्राःपृथक्पृथक् ॥ ४६ ॥ ध्यायेत्सदाशिवंसाक्षाद्देवंसकलनिष्कलम् ॥ शुद्धस्फटिकसंकाशंप्रसन्नं
शीतलद्युतिम् ॥ ४७ ॥ विद्युद्वलयसंकाशंजटामुकुटभूषितम् ॥ शार्दूलचर्मवसनंकिंचित्स्मितमुखांबुजम् ॥ ४८ ॥
रक्तपद्मदलप्रख्यपाणिपादतलाधरम् ॥ सर्वलक्षणसंपन्नंसर्वाभरणभूषितम् ॥ ४९ ॥ दिव्यायुधवरैर्युक्तंदिव्यगं
धानुलेपनम् ॥ पंचवक्त्रंदशभुजंचंद्रखंडशिखामणिम् ॥ ५० ॥ अस्यपूर्वमुखंसौम्यंबालार्कसदृशप्रभम् ॥ त्रिलोच
नारविंदाढ्यंबालेंदुकृतशेखरम् ॥ ५१ ॥ दक्षिणंनीलजीमूतसमानरुचिरप्रभम् ॥ भृकुटीकुटिलंघोरंरक्तवृत्तत्रिलो
चनम् ॥ ५२ ॥ दंष्ट्राकरालंदुष्प्रेक्ष्यंस्फुरिताधरपल्लवम् ॥ उत्तरंविद्रुमप्रख्यंनीलालकविभूषितम् ॥ ५३ ॥ सद्विला
संत्रिनयनंचंद्रार्धकृतशेखरम् ॥ पश्चिमंपूर्णचंद्राभंलोचनत्रितयोज्वलम् ॥ ५४ ॥ चंद्रलेखाधरंसौम्यंमंदस्मितमनो
हरम् ॥ पंचमंस्फटिकप्रख्यमिंदुरेखासमुज्वलम् ॥ ५५ ॥ ॥ ॥ ॥

ध्यायेदितिसंबंधः ॥ ४१ ॥ ईश्वरंविशिनष्टि ॥ शुद्धस्पटिकेति ॥ ४२ ॥ व्याप्यंविशेषेणप्राप्यं ॥ यद्वाणुत्वात्सर्वैर्न्व्याप्तुंयोग्यमापिमहत्तरं ॥ अणोरिति ॥ ॥ ११ ॥
अणोरणीयान्महतोमहीयानितिश्रुतेः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ अस्यपरमेश्वरस्य ॥५१॥५२॥५३॥५४॥५५॥

दक्षिणेदक्षिणभागे ॥ ५६ ॥ निवृत्त्याउक्तयाकलया ॥ एवमग्रेपि ॥ ५७ ॥ ५८ ॥ कलापंचकविग्रहंनिवृत्त्यादिकलापंचकमयशरीरं ॥ ५९ ॥ ६० ॥

अतीवसौम्यमुत्फुल्ललोचनत्रितयोज्वलम् ॥ दक्षिणेशूलपरशुवज्रखड्गानलोज्वलम् ॥ ५६ ॥ सव्येपिनाकनाराचघंटापाशांकुशोज्वलम् ॥ निवृत्त्याजानुपर्यंतमानाभेश्चप्रतिष्ठया ॥ ५७ ॥ आकंठंविद्ययातद्वदाललाटंतुशांतया ॥ तदूर्ध्वंशांत्यतीताख्यकलयापरयातथा ॥ ५८ ॥ पंचाध्वव्यापिनंतस्मात्कलापंचकविग्रहम् ॥ ईशानमुकुटंदेवंपुरुषास्यंपुरातनम् ॥ ५९ ॥ अघोरहृदयंतद्वद्वामगुह्यंमहेश्वरम् ॥ सद्यपादंचतन्मूर्तिमष्टत्रिंशत्कलामयम् ॥ ६० ॥ मातृकामयमीशानंपंचब्रह्ममयंतथा ॥ ओंकाराख्यमयंचैवहंसन्यासमयंतथा ॥ ६१ ॥ पंचाक्षरमयंदेवंषडक्षरमयंतथा ॥ अंगषट्कमयंचैवजातिषट्कसमन्वितम् ॥ ६२ ॥ एवंध्यात्वाथमद्वामभागेत्वांचमनोन्मनीम् ॥ गौरीमिमाय मंत्रेणप्रणवाद्येनभक्तितः ॥ ६३ ॥ आवाह्यपूर्ववत्कुर्यान्नमस्कारांतमीश्वरि ॥ ध्यायेत्ततस्त्वांदेवेशिसमाहितमनामुनिः ॥ ६४ ॥ प्रफुल्लोत्पलपत्राभांविस्तीर्णायतलोचनाम् ॥ पूर्णचंद्राभवदनांनीलकुंचितमूर्धजाम् ॥ ६५ ॥ नीलोत्पलदलप्रख्यांचंद्रार्धकृतशेखराम् ॥ अतिवृत्तघनोत्तुंगस्निग्धपीनपयोधराम् ॥ ६६ ॥ तनुमध्यांपृथुश्रोणींपीतसूक्ष्मतरांबराम् ॥ सर्वाभरणसंपन्नांललाटतिलकोज्वलां ॥ ६७ ॥ विचित्रपुष्पसंकीर्णकेशपाशोपशोभिताम् ॥ सर्वतोनुगुणाकारांकिंचिल्लज्जानताननाम् ॥ ६८ ॥ हेमारविंदंविलसद्दधानांदक्षिणेकरे ॥ दंडवच्चापरंहस्तंन्यस्यासीनांमहासने ॥ ६९ ॥ एवंमांत्वांचदेवेशिध्यात्वानियतमानसः ॥ स्नापयेच्छंखतोयेनप्रणवप्रोक्षणक्रमात् ॥ ७० ॥ भवेभवेनातिभवइतिपाद्यंप्रकल्पयेत् ॥ वामायनमइत्युक्त्वादद्यादाचमनीयकम् ॥ ७१ ॥ ज्येष्ठायनमइत्युक्त्वाशुभ्रवस्त्रंप्रकल्पयेत् ॥ श्रेष्ठायनमइत्युक्त्वादद्याद्यज्ञोपवीतकम् ॥ ७२ ॥ रुद्रायनमइत्युक्त्वापुनराचमनीयकं ॥ कालायनमइत्युक्त्वागंधंदद्यात्सुसंस्कृतम ॥ ७३ ॥ ॥ ॥ ॥ ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ तनुमध्यांकृशमध्यां ॥ ६७ ॥ ६८ ॥ हेमारविंदमिति ॥ दक्षिणेकरेहेमारविंदंदंडवद्दधानामपरंचहस्तं महासनेन्यस्यासीनामित्यन्वयः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ॥ ॥ ॥ ॥

॥१२॥ कलविकरणायनमोऽक्षतंपरिकल्पयेत् ॥ वलविकरणायनमइतिपुष्पाणिदापयेत् ॥ ७४ ॥ बलायनमइत्युक्त्वाधूपंद अ०६
द्यात्प्रयत्नतः ॥ बलप्रमथनायेतिसुदीपंचप्रदापयेत् ॥ ७५ ॥ ब्रह्मभिश्चषडंगैश्चततोमातृकयासह ॥ प्रणवेनशिवे
नैवशक्तियुक्तेनचक्रमात् ॥ ७६ ॥ मुद्राःसंदर्शयेन्मह्यंतुभ्यंचवरवर्णिनि ॥ मयिप्रकल्पयेत्पूर्वमुपचारांस्ततस्त्वयि ॥
॥ ७७ ॥ यदालयिप्रकुर्वीतस्त्रीलिंगंयोजयेत्तदा ॥ पंचावरणपूजांतुप्रारभेतयथाक्रमम् ॥ ७८ ॥ प्रथमंपूजितौयत्र
तत्रैवक्रमशःसुधीः ॥ गंधाद्यैरर्चयेत्पूर्वंदेवौहेरंबषण्मुखौ ॥ ७९ ॥ पंचब्रह्माणिपरितोवृत्तंसंपूजयेत्क्रमात् ॥ ईशान
देशेपूर्वेचदक्षिणेचोत्तरेसदा ॥ ८० ॥ पश्चिमेचततस्तस्मिन्षडंगानिसमर्चयेत् ॥ आग्नेयेचतथैशानेनैर्ऋतेवायुदेश
के ॥ ८१ ॥ मध्येनेत्रंतद्वदस्त्रंपूर्वादिपरितःक्रमात् ॥ प्रथमावरणंप्रोक्तंद्वितीयावरणंशृणु ॥ ८२ ॥ अनंतंपूर्वदिक्प
त्रेसूक्ष्मंदक्षिणतस्ततः ॥ शिवोत्तमंपश्चिमतएकनेत्रंतथोत्तरे ॥ ८३ ॥ एकरुद्रंतथैशानेत्रिमूर्तिंवन्हिदिग्दले ॥ श्रीकं
ठंनैर्ऋतेवायौशिखंडीशंसमर्चयेत् ॥ ८४ ॥ द्वितीयावरणेचैवंपूज्यास्तेचक्रवर्तिनः ॥ पूर्वद्वारस्यमध्येतुवृषेशानंप्रपूज
येत् ॥ ८५ ॥ तद्दक्षिणेनंदिनंचमहाकालंतदुत्तरे ॥ भृंगीशंदक्षिणद्वारपश्चिमेसंप्रपूजयेत् ॥ ८६ ॥ तत्पूर्वकोष्ठेगंधा
द्यैःसंपूज्यचविनायकं ॥ पश्चिमोत्तरकोष्ठेचवृषभंदक्षिणेगुहम् ॥ ८७ ॥ उत्तरद्वारपूर्वेतुप्रदक्षिणविधानतः ॥ भवंश
र्वंतथेशानंरुद्रंपशुपतिंपुनः ॥८८॥ उग्रंभीमंमहादेवंतृतीयावरणंत्विदम् ॥ योवेदादौस्वरइतिसमावाह्यमहेश्वरम् ॥
॥ ८९ ॥ पूजयेत्पूर्वदिग्भागेकमलेकर्णिकोपरि ॥ ईश्वरंपूर्वदिक्पत्रेविश्वेशंदक्षिणेततः ॥ ९० ॥ सौम्येतुपरमेशानं
सर्वेशंपश्चिमेयजेत् ॥ दक्षिणेतुयजेद्रुद्रमावोराजानमित्यृचा ॥ ९१ ॥ आवाह्यगंधपुष्पाद्यैःकर्णिकायांदलेषुच ॥
शिवःपूर्वेदक्षिणतोहरउत्तरतोमृडः ॥ ९२ ॥ ॥ ॥ ॥ ॥ ॥१२॥

॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ तत्तस्थानेषुपूर्वादिदिक्षु ॥ रांतमिति ॥ ओंरांओंयांइत्यादीनिलोकपालानांदशवीजानिसंति ॥ एतैर्बीजैरेता
न्लोकपालान्समर्चयेदितिसंबंधः ॥ अपूर्वकंअवर्णपूर्वकंअंओंएवमात्मकं ॥ ९८ ॥ वेदाद्यंप्रणवः ॥ शिवार्चनचंद्रिकायांतंत्रसारेतुओंलांइंद्रायओंरांअग्नये

भवःपश्चिमदिक्पत्रेपूज्याएतेयथाक्रमम् ॥ उत्तरेविष्णुमावाह्यगंधपुष्पादिभिर्यजेत् ॥ ९३ ॥ प्रतद्विष्णुरितिप्रोच्य
कर्णिकायांदलेषुच ॥ वासुदेवंपूर्वभागेदक्षिणेचानिरुद्धकम् ॥ ९४ ॥ सौम्येसंकर्षणंचैवप्रद्युम्नंपश्चिमेयजेत् ॥ ब्रह्मा
णंपश्चिमेपद्मेसमावाह्यसमर्चयेत् ॥ ९५ ॥ हिरण्यगर्भःसमवर्ततइतिमंत्रेणमंत्रवित् ॥ हिरण्यगर्भंपूर्वस्यांविराजंद
क्षिणेततः ॥ ९६ ॥ उत्तरेपुरुषंचैवकालंपश्चिमतोयजेत् ॥ सर्वोर्ध्वपंक्तौपूर्वादिप्रदक्षिणविधानतः ॥ ९७ ॥ तत्तत्स्था
नेषुसंपूज्यालोकपालाअनुक्रमात् ॥ रांतंयांततथाज्ञांतंलांतंलांतमपूर्वकम् ॥ ९८ ॥ षांतंसांतंचवेदाद्यंश्रीबीजंचद
शक्रमात् ॥ बीजानिलोकपालानामेतैरेतान्समर्चयेत् ॥ ९९ ॥ नैर्ऋतेउत्तरेतद्वदीशानस्यचदक्षिणे ॥ ब्रह्मविष्णू
चविधिनापूजयेदुपचारकैः ॥ १०० ॥ बाह्यरेखासुदेवेशिपंचमावरणंयजेत् ॥ श्रीमत्त्रिशूलमीशानेवज्रंमाहेंद्रदिङ्मु
खे ॥ १०१ ॥ परशुंवन्हिदिग्भागेयाम्येसायकमर्चयेत् ॥ नैर्ऋतेतुयजेत्खड्गंपाशंवरुणगोचरे ॥ १०२ ॥ अंकुशंमारु
तेभागेपिनाकंचोत्तरेयजेत् ॥ पश्चिमाभिमुखंरौद्रंक्षेत्रपालंसमर्चयेत् ॥ १०३ ॥ कृतांजलिपुटाःसर्वेचिंत्याःस्मितमु
खांबुजाः ॥ सादरंप्रेक्षमाणाश्चदेवंदेवींचसर्वदा ॥ १०४ ॥ इत्थमावरणाभ्यर्चांकृत्वाव्याक्षेपशांतये ॥ पुनरभ्यर्च्य
देवेशंप्रणवंचशिवंवदेत् ॥ १०५ ॥ एवमभ्यर्च्यविधिवद्गंधाद्यैरुपचारकैः ॥ उपचर्यततोदद्यान्नैवेद्यंविधिसाधितम्
॥ १०६ ॥ पुनराचमनीयंचदद्यादर्घ्यंयथापुरा ॥ ततोनिवेद्यपानीयंतांबूलंचोपदंशकैः ॥ १०७ ॥ नीराजनादिकंकृत्वा
पूजाशेषंसमापयेत् ॥ ध्यात्वादेवंचदेवींचमनुमष्टोत्तरंजपेत् ॥ १०८ ॥ ॥ ॥

एवंक्रमेणओंमांओंक्षांओंवांओंयांओंसांओंहांइत्यष्टानांलोकपालानांबीजान्युक्तानि ॥ ९९ ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ व्याक्षे
पशांतयेविविधविघ्नशांत्यर्थं ॥ १०५ ॥ १०६ ॥ उपदंशकैःखाद्यविशेषैःसह ॥ १०७ ॥ अष्टोत्तरमिति ॥ शतमितिशेषः ॥ १०८ ॥

योदेवानामितीति ॥ महादेवंध्यात्वानारायणीयोपनिषदियोदेवानांप्रथमंपुरस्तादित्यृचमारभ्ययोवेदादौस्वरप्रोक्तइत्यंतंपङ्क्तिचंजपेदितिसंबंधः ॥ १०९ ॥
॥ ११० ॥ तंमहादेवं ॥ १११ ॥ नामाष्टकेनशिवोमहेश्वरइत्यादिनावक्ष्यमाणेन ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ आद्यंपंचकंपितामहांतं ॥
पंचोपाधिपरिग्रहादिति ॥ उपाधयश्चवक्ष्यंते ॥ ११६ ॥ यथास्वमुक्तसंज्ञादिकं ॥ विनिवृत्तौहेतुमाह ॥ पदमेवेति ॥ पदिनःसदाशिवादिमूर्तयः ॥ ११७ ॥



ततउत्थायरचितपुष्पांजलिपुटःस्थितः ॥ जपेद्ध्यात्वामहादेवंयोदेवानामितिक्रमात् ॥ १०९ ॥ योवेदादौस्वरःप्रोक्त
इत्यंतंपरमेश्वरि ॥ पुष्पांजलिंततोदत्वात्रिःप्रदक्षिणमाचरेत् ॥ ११० ॥ साष्टांगंप्रणमेत्तंचभक्त्यापरमयान्वितः ॥ पु
नःप्रदक्षिणंकृत्वाप्रणमेत्पुनरेकधा ॥ १११ ॥ स्थित्वासनेसमभ्यर्च्यदेवंनामाष्टकेनच ॥ साधुवाऽसाधुवाकर्मयद्य
दाचरितंमया ॥ ११२ ॥ तत्सर्वंभगवन्शंभोभवदाराधनंपरम् ॥ इतिशंखोदकेनैवसपुष्पेणसमर्चयेत् ॥ ११३ ॥
पूज्यांपुनःसमभ्यर्च्यसार्थंनामाष्टकंजपेत् ॥ शिवोमहेश्वरश्चैवरुद्रोविष्णुःपितामहः ॥ ११४ ॥ संसारवैद्यःसर्वज्ञःप
रमात्मेतिमुख्यतः ॥ नामाष्टकमिदंनित्यंशिवस्यप्रतिपादकम् ॥ ११५ ॥ आद्यंतुपंचकंतत्रशांत्यतीताद्यनुक्रमात् ॥
संज्ञासदाशिवादीनांपंचोपाधिपरिग्रहात् ॥ ११६ ॥ उपाधिविनिवृत्तौतुयथास्वंविनिवर्तते ॥ पदमेवहितन्नित्यम
नित्याःपदिनःस्मृताः ॥ ११७ ॥ पदांपरिवृत्तिःस्यान्मुच्यंतेपदिनोयतः ॥ परिवृत्त्यंतरेप्येवंभूयस्तस्याप्युपाधिना ॥
॥ ११८ ॥ आत्मांतराभिधानंस्याद्यदाद्यंनामपंचकम् ॥ अन्यतुत्रितयंनाम्नामुपादानादियोगतः ॥ ११९ ॥ त्रि
विधोपाधिवचनाच्छिवएवतुवर्तते ॥ अनादिमलसंश्लेषप्रागभावात्स्वभावतः ॥ १२० ॥ अत्यंतपरिशुद्धात्मेत्यतोयं
शिवउच्यते ॥ अथवाशेषकल्याणगुणैकघनईश्वरः ॥ १२१ ॥ ॥ ॥ ॥

पदानामिति ॥ यदेत्यादिः ॥ परिवृत्तिर्विनिमयः ॥ परिवृत्त्यंतरेपदांतरप्राप्तौ ॥ तस्यापिपदिनोपि ॥ ११८ ॥ उपादानादीति ॥ जगदुपादानकारणादीनांप्र
कृत्यादीनांयोगतइत्यर्थः ॥ ११९ ॥ त्रिविधोपाधिवचनात्वक्ष्यमाणत्रिविधोपाधिकथनादन्यन्नाम्नांत्रितयमितिपूर्वेणसंबंधः ॥ सार्थनामाष्टकंजपेदित्युक्त
मतःशिवाद्यष्टानांनाम्नामुपाधिभूतानर्थानाह ॥ शिवइति ॥ १२० ॥ १२१ ॥ ॥ ॥

महेश्वरनामार्थमाह ॥ त्रयोविंशतीति ॥ त्रयोविंशतितत्वेभ्योमहदादिभ्यः ॥ १२२ ॥ स्वरंप्रणवात्मकं ॥ १२३ ॥ प्रतिष्ठितमिति ॥ प्रतिपाद्यत्वेनेतिभावः ॥ १२४ ॥ परःप्रकृतेर्भोक्तुःपुरुषादपिपरःअतीतः ॥ तत्रहेतुमाह ॥ तदधीनेति ॥ पुरुषस्यप्रकृतेश्चतदधीनप्रवृत्तित्वान्महेश्वराधीनप्रवृत्तित्वादित्यर्थः ॥ ॥ १२५ ॥ मायेयं मायामयं ॥ १२६ ॥ अनंतःनारायणः ॥ रुद्रशब्दप्रवृत्तिनिमित्तमाह ॥ रुदिति ॥ १२७ ॥ विष्णुशब्दार्थमाह ॥ शिवेति ॥ १२८ ॥

शिवइत्युच्यतेसद्भिःशिवतत्वार्थवेदिभिः ॥ त्रयोविंशतितत्वेभ्यःपराप्रकृतिरुच्यते ॥ १२२ ॥ प्रकृतेस्तुपरंप्राहुःपुरुषंपंचविंशकम् ॥ यंवेदादौस्वरंप्राहुर्वाच्यवाचकभावतः ॥ १२३ ॥ वेदैकवेद्यंयाथात्म्याद्वेदांतेचप्रतिष्ठितम् ॥ सएव प्रकृतौलीनोभोक्तायःप्रकृतेर्यतः ॥ १२४ ॥ तस्यप्रकृतिलीनस्ययःपरःसमहेश्वरः ॥ तदधीनप्रवृत्तित्वात्प्रकृतेःपुरुषस्यच ॥ १२५ ॥ अथवात्रिगुणंतत्वंमायेयमिदमव्ययम् ॥ मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥ १२६ ॥ मायाविक्षोभकोनंतोमहेश्वरसमन्वयात् ॥ रुद्दुःखंदुःखहेतुर्वातद्द्रावयतियःप्रभुः ॥ १२७ ॥ रुद्रइत्युच्यतेतस्माच्छिवःपरमकारणम् ॥ शिवतत्वादिभूम्यंतंशरीरादिघटादिच ॥ १२८ ॥ व्याप्याधितिष्ठतिशिवस्तस्माद्विष्णुरुदाहृतः ॥ जगतःपितृभूतानांशिवोमूर्त्यात्मनामपि ॥ १२९ ॥ पितृभावेनसर्वेषांपितामहउदीरितः ॥ निदानज्ञोयथावैद्योरोगस्यविनिवर्तकः ॥ १३० ॥ उपायैर्भेषजैस्तद्वल्लयभोगाधिकारतः ॥ संसारस्येश्वरोनित्यंस्थूलस्यविनिवर्तकः ॥ १३१ ॥ संसारवैद्यइत्युक्तःशिवतत्वार्थवेदिभिः ॥ दशार्धज्ञानसिध्यर्थमिंद्रियेषुचसत्स्वपि ॥ १३२ ॥ त्रिकालभाविनोभावान् स्थूलान्सूक्ष्मानशेषतः ॥ अणवोनैवजानंतिमायार्णवमलावृताः ॥ १३३ ॥ असत्स्वपिचसर्वेषुसिद्धसर्वार्थवेदिषु ॥ यद्यथावस्थितंवस्तुतत्तथैवसदाशिवः ॥ १३४ ॥ अयत्नेनैवजानातितस्मात्सर्वज्ञउच्यते ॥ सर्वात्मापरमैरेभिर्गुणैर्नित्यसमन्वयात् ॥ १३५ ॥ स्वस्मात्परात्मविरहात्परमात्माशिवःस्वयम् ॥ इतिस्तुत्वामहादेवंप्रणवात्मानमव्ययम् १३६

पितामहनाम्नःप्रवृत्तौहेतुमाह ॥ जगतइति ॥ पितृभूतानांब्रह्मादीनां ॥ १२९ ॥ संसारवैद्यइतिनामयथाप्रवृत्तंतदाह ॥ निदानज्ञइति ॥ १३० ॥ लयभोगाधिकारतःभोगमोक्षप्रदानाधिकारात् ॥ १३१ ॥ दशार्धेति ॥ दशार्धशब्दादिपंचकंतज्ज्ञानसिध्यर्थमित्यर्थः ॥ १३२ ॥ अणवोजीवाः ॥ १३३ ॥ सिद्धसर्वार्थवेदिषुइंद्रियेष्वितिसंबध्यते ॥ १३४ ॥ परमात्मशब्दप्रवृत्तौकारणमाह ॥ सर्वात्मेति ॥ एभिःसर्वज्ञत्वादिभिः ॥ १३५ ॥ १३६ ॥ ॥

पराङ्मुखार्घ्यस्वाभिमुखार्घ्यं ॥ १३७ ॥ १३८ ॥ १३९ ॥ १४० ॥ १४१ ॥ एतन्मंडलनामाह ॥ कैलासेति ॥ १४२ ॥ १४३ ॥ समभ्यर्च्यात्स





दत्वापराङ्मुखार्घ्यंचपश्चादीशानमस्तके ॥ पुनरभ्यर्च्यदेवेशंप्रणवेनसमाहितः ॥१३७॥ हस्तेनबद्धांजलिनापूजा
पुष्पंप्रगृह्यच ॥ उन्मनांतंशिवंनीत्वावामनासापुटाध्वना ॥ १३८ ॥ देवीमुद्वास्यचततोदक्षनासापुटाध्वना ॥ शिव
एवाहमस्मीतितदैवमनुभूयच ॥ १३९ ॥ सर्वावरणदेवांश्चपुनरुद्वासयेत्धृदि ॥ विद्यापूजांगुरोःपूजांकृत्वापश्चाद्यथा
क्रमम् ॥ १४० ॥ शंखार्घ्यपात्रमंत्रांश्चत्वद्दयेविन्यसेत्क्रमात् ॥ निर्माल्यंचसमर्प्याथचंडेशायेशगोचरे ॥ १४१ ॥
पुनश्चसंयतप्राणोऋष्यादिकमथोच्चरेत् ॥ कैलासप्रस्तरोनाममंडलंपरिभाषितम् ॥ १४२ ॥ अर्चयेन्नित्यमेवैतत्पक्षे
वामासिमासिवा ॥ षण्मासेवत्सरेवापिचातुर्मास्यादिपर्वणि ॥१४३॥ असमर्थःसमभ्यर्च्यान्नित्यंमल्लिंगमास्तिकः॥
तस्मिन्क्रमेमहादेविविशेषःकोपिकथ्यते ॥ १४४ ॥ उपदेशदिनेलिंगंपूजितंगुरुणासह ॥ गृण्हीयादर्चयिष्यामि
शिवमाप्राणसंक्षयम् ॥ १४५ ॥ एवंत्रिवारमुच्चार्यशपथंगुरुसन्निधौ ॥ ततःसमर्चयेन्नित्यंपूर्वोक्तविधिनाप्रिये ॥
॥ १४६ ॥ अर्घ्यंसमर्पयेल्लिंगमूर्धन्यर्घोदकेनच ॥ प्रणवेनसमभ्यर्च्यधूपदीपौसमर्पयेत् ॥ १४७॥ ऐशान्यांचंडमा
राध्यनिर्माल्यंचनिवेदयेत् ॥ प्रक्षाल्यल्लिंगंवेदींचवस्त्रपूतैर्जलैस्ततः ॥ १४८ ॥ निक्षिप्यपुष्पंशिरसिलिंगस्यप्रणवे
नतु ॥ आधारशक्तिमारभ्यशुद्धविद्यासनावधि ॥ १४९ ॥ विभाव्यसर्वंमनसास्नापयेत्परमेश्वरम् ॥ पंचगव्यादि
भिर्गव्यैर्यथाविभवसंभृतैः ॥ १५० ॥ केवलैर्वाजलैःशुद्धैःसुरभिद्रव्यवासितैः ॥ पावमानेनरुद्रेणनीलेनत्वरितेनच
॥ १५१ ॥ लिंगसूक्तादिसूक्तैश्चशिरसाथर्वणेनच ॥ ऋग्भिश्चसामभिर्वापिब्रह्मभिश्चैवपंचभिः ॥ १५२ ॥



मभ्यर्चयेत् ॥ १४४ ॥ १४५ ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥ पावमानेनपवमानःसुवर्जनइत्यनुवाकेन ॥ रुद्रेणनमस्तेरुद्रइत्यध्याये
ननीलेनएतदाख्यसूक्तेनतथैवत्वरितेन ॥ १५१ ॥ शिरसाआथर्वणेनशैवाथर्वशीर्षेण ॥ पंचभिःसद्योजातमित्यादिभिः ॥ १५२ ॥ ॥

॥ १५३ ॥ १५४ ॥ १५५ ॥ रंजयेत्प्रीणयेत् ॥ १५६ ॥ १५७ ॥ १५८ ॥ १५९ ॥ १६० ॥ १६१ ॥ १६२ ॥ १६३ ॥ १६४ ॥ तेपि

स्नापयेद्देवदेवेशंप्रणवेनशिवेनच ॥ विशेषार्घोदकेनापिप्रणवेनाभिषेचयेत् ॥ १५३ ॥ विशोध्यवाससापुष्पंलिंगमू
र्धनिविन्यसेत् ॥ पीठेलिंगंसमारोप्यसूर्याद्यर्चांसमाचरेत् ॥ १५४ ॥ आधारशक्त्यनंतौद्वौपीठाधस्तात्समर्चयेत् ॥
सिंहासनंतदूर्ध्वंतुसमभ्यर्च्ययथाक्रमम् ॥ १५५ ॥ अथोर्ध्वच्छदनंपीठपादेकंदंसमर्चयेत् ॥ मूर्तिलिंगेसमाकल्प्यमाल
यासहरंजयेत् ॥ १५६ ॥ एवंमयातेकथितमतिगुह्यमिदंप्रिये ॥ गोपनीयंप्रयत्नेननदेयंयस्यकस्यचित् ॥ १५७ ॥
ममभक्तायदातव्यंयतयेवीतरागिणे ॥ गुरुभक्तायशांतायमदर्थोद्योगभागिने ॥ १५८ ॥ ममाज्ञामतिलंघ्यैतद्योद
दातिविमूढधीः ॥ सनारकीममद्रोहीभविष्यतिनसंशयः ॥ १५९ ॥ मद्भक्तदानाद्देवेशिमत्प्रियश्चभवेद्ध्रुवम् ॥ व्यास०
॥ एतच्छ्रुत्वामहादेवीदेवेनपरिभाषितम् ॥ १६० ॥ स्तुत्वातुविविधैःस्तोत्रैर्देववेदार्थगर्भितैः ॥ श्रीमत्पादाब्जयोःप
त्युःप्रणम्यपरमेश्वरी ॥ १६१ ॥ अतिप्रहृष्टहृदयामुमोदमुनिसत्तमाः ॥ अतिगुह्यमिदंविप्राःप्रणवार्थप्रकाशकम् ॥
॥ १६२ ॥ शिवज्ञानंपरंह्येतद्भवतामार्तिनाशनम् ॥ सूतउवाच ॥ इत्युक्त्वामुनिशार्दूलःपाराशर्योमहातपाः ॥ १६३ ॥
पूजितःपरयाभक्त्यामुनिभिर्वेदवादिभिः ॥ कैलासाद्रिमनुस्मृत्यययौतस्मात्तपोवनात् ॥ १६४ ॥ तेपिप्रहृष्टहृदयाः
सत्रांतेपरमेश्वरम् ॥ संपूज्यपरयाभक्त्यासोमंसोमार्धशेखरम् ॥ १६५ ॥ यमादियोगनिरताःशिवध्यानपराभवन् ॥
गुहायकथितंह्येतद्देव्यातेनापिनंदिने ॥ १६६ ॥ सनत्कुमारमुनयेप्रोवाचभगवानपि ॥ तस्माल्लब्धंमद्गुरुणाव्यासे
नामिततेजसा ॥ १६७ ॥ तस्माल्लब्धमिदंपुण्यंमयापिमुनिपुंगवाः ॥ भवद्भिरपिदातव्यमेतद्गुह्यंशिवप्रियम् ॥ १६८ ॥
यतिभ्यःशांतचित्तेभ्योभक्तेभ्यःशिवपादयोः ॥ एतदुक्त्वामहाभागःसूतःपौराणिकोत्तमः ॥ १६९ ॥ तीर्थयात्राप्रसंगे
नचचारपृथिवीमिमां ॥ एतद्रहस्यंपरमंलब्ध्वासूतान्मुनीश्वराः ॥ काश्यामेवसमासीनामुक्ताःशिवपदंययुः ॥ १७० ॥
इतिश्रीशिवमहापुराणेकैलाससंहितायांसारबोधिन्यामुत्तरभागेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥

मुनयोपि ॥ १६५ ॥ शिवध्यानपराभवन्निति ॥ अत्रसंधिरडभावोवार्षः ॥ गुहायस्कंदाय ॥ तेनगुहेन ॥ १६६ ॥ भगवान्नंदी ॥ तस्मात्सनत्कुमारात्
॥ १६७ ॥ १६८ ॥ १६९ ॥ १७० ॥ इतिश्रीशिवमहापुराणेकैलाससंहिताटीकायांसारबोधिन्यामुत्तरभागेषष्ठोध्यायः ॥ ६ ॥ ॥

ओंनमःशिवाय ॥ ततस्तुतीर्थयात्रादिकृत्वाब्दानंतरंपुनः ॥ काशीमागत्यसूतस्तान्वक्तुंसमुपचक्रमे ॥ १ ॥ प्रणवार्थंपुरापृच्छद्वामदेवोगुहंयथा ॥ तत्सर्वंसत्तमे ध्यायेविस्तरेणनिरूप्यते ॥ २ ॥ मुनीश्वरप्रसूचितंपूर्वंमुनीश्वरेणसूतेनवोधितं ॥ कष्टमिति ॥ विस्मृतत्वादितिभावः ॥ १ ॥ भूयादिति ॥ आशीर्लिङ्गतेषां मुनिवर्यदर्शनमेवपरममिष्टंवभूवेतिसूचितं॥मुनिवर्यःसूतः॥तद्दर्शनस्येष्टत्वेहेतुगर्भंविशेषणमाह॥भवाब्धीति॥तदेवव्यक्तीकरोति॥महेश्वरेति ॥ मुनीश्वरःसूतः ॥

व्यासउवाच ॥ गतेथसूतेमुनयःसुविस्मिताविचिंत्यचाऽन्योन्यमिदंतुविस्मृतं ॥ यद्वामदेवस्यमतंमुनीश्वरप्रसूचितंत त्खलुकष्टमद्यनः ॥ १ ॥ कदानुभूयान्मुनिवर्यदर्शनंभवाब्धिदुःखौघहरंपरंहितत् ॥ महेश्वराराधनपुण्यतोऽधुनामु नीश्वरःसत्वरमाविरस्तुनः ॥ २ ॥ इतिचिंतासमाविष्टामुनयोमुनिपुंगवम् ॥ व्यासंसंपूज्यतत्पद्मेतस्थुस्तद्दर्शनोत्सु काः ॥ ३ ॥ संवत्सरांतेचपुनःकाशींप्रापमहामुनिः ॥ तंदृष्ट्वासूतमायांतंमुनयोत्दृष्टचेतसः ॥ ४ ॥ अभ्युत्थानासना र्घ्यादिपूजयासमपूजयन् ॥ सोपितान्मुनिशार्दूलानभिनंद्यस्मितोदरम् ॥ ५ ॥ अथस्नात्वाजान्हवीयेजलेपरमपाव ने ॥ ऋषीन्संतर्प्यचसुरान्पितॄंश्चतिलतंडुलैः ॥ ६ ॥ तीरमागत्यसंप्रोक्ष्यवाससीपरिधायच ॥ द्विराचम्यसमादाय भस्मसद्यादिमंत्रतः ॥ ७ ॥ उद्धूलनादिक्रमतोविधायाथमुनीश्वरः ॥ रुद्राक्षमालाभरणःकृतनित्यक्रियःसुधीः ॥ ८ ॥ विश्वेश्वरमुमाकांतंससुतंसगणाधिपम् ॥ संपूज्यपरयाभक्त्यास्तुत्वानत्वामुहुर्मुहुः ॥ ९ ॥ कालभैरवनाथंचसंपूज्याथ विधानतः ॥ प्रदक्षिणीकृत्यपुनस्त्रेधानत्वाचपंचधा ॥ १० ॥ पुनःप्रदक्षिणीकृत्यप्रणम्यभुविदंडवत् ॥ श्रीमत्पंचाक्ष रींविद्यामष्टोत्तरसहस्रकम् ॥ ११ ॥ संजप्यपुरतःस्थित्वाक्षमाप्यचमहेश्वरम् ॥ चंडेशंसंप्रपूज्याथमुक्तिमंडपमध्यतः ॥ १२ ॥ निर्दिष्टमासनंभेजेमुनिभिर्वेदपारगैः ॥ एवंस्थितेषुसर्वेषुनमस्कृत्यसमंत्रकम् ॥ १३ ॥ अथप्राहमुनींद्रा णांभावदृद्धिकरंवचः ॥ सूतउवाच ॥ इतोनिर्गत्यसंप्राप्यतीरंदक्षपयोनिधेः ॥ १४ ॥ स्नात्वासंपूज्यविधिवद्देवींकन्या मर्यीशिवाम् ॥ पुनरागत्यविप्रेंद्राःसुवर्णमुखरीतटे ॥ १५ ॥ श्रीकालहस्तिशैलाख्यनगरेपरमाद्भुते ॥ सुवर्णमुखरी तोयेस्नात्वादेवान्नृषीनपि ॥ १६ ॥ ॥ ॥ ॥ ॥

॥ २ ॥ तद्दर्शनोत्सुकाःसूतदर्शनोत्सुकाः ॥ ३ ॥ ४ ॥ सोपिसूतोपि ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ सर्वेषुमुनिषु ॥ १३ ॥ दक्षपयोनिधेःद क्षिणसमुद्रस्य ॥ १४ ॥ कन्यामर्यीकन्याकुमारीतिप्रसिद्धां ॥ १५ ॥ १६ ॥ ॥ ॥ ॥ ॥

॥१७॥ दक्षिणगांदक्षिणभागेस्थितां ॥१८॥ ज्ञानप्रसूनेति ॥ ज्ञानंब्रह्मज्ञानमेवप्रसूनंपुष्पंतस्यदातृत्वेनकालिकांकोरकरूपांज्ञानप्रदामित्यर्थः॥अष्टोत्तरसहस्रकमिति ॥ जपित्वेतिशेषः ॥ १९ ॥ गिरिंकालहस्तिशैलं ॥ २० ॥ २१ ॥ २२ ॥ मुनिःमननशीलः ॥ २३॥ मद्गुरुःव्यासः ॥ २४ ॥ प्रांशुःउच्छ्रितः

संतर्प्यकालहस्तीशंचंद्रकांतसमप्रभम् ॥ पश्चिमाभिमुखंपंचशिरसंपरमाद्भुतम् ॥ १७ ॥ सकृद्दर्शनमात्रेणसर्वाघ क्षयकारकम् ॥ संपूज्यपरयाभक्त्यातस्यदक्षिणगांशिवाम् ॥ १८ ॥ ज्ञानप्रसूनकलिकामपिसंपूज्यभक्तितः ॥ श्रीमत्पंचाक्षरींविद्यामष्टोत्तरसहस्रकम् ॥ १९ ॥ क्षणंप्रदक्षिणीकृत्यस्तुलानत्वामुहुर्मुहुः ॥ प्रदक्षिणीकृत्यगिरिंप्रत्यहंपरयामुदा ॥ २० ॥ एवंनियममास्थायस्थितोऽहंक्षेत्रनायके ॥ नीत्वाचचतुरोमासानेतदंतेमुनीश्वराः ॥ २१ ॥ ज्ञानप्रसूनकलिकामहादेव्याःप्रसादतः ॥ एकदातुसमास्तीर्यचैलाजिनकुशोत्तरम् ॥ २२ ॥ आसनंपरमंतस्मिन्स्थित्वारुद्धेंद्रियोमुनिः ॥ समाधिमास्थायसदापरमानंदचिद्घनः ॥ २३ ॥ परिपूर्णःशिवोऽस्मीतिनिर्व्यग्रत्वदयोभवम् ॥ एतस्मिन्नेवसमयेमद्गुरुःकरुणानिधिः ॥ २४ ॥ नीलजीमूतसंकाशोविद्युत्पिंगजटाधरः ॥ प्रांशुःकमंडलुदंडकृष्णाजिनधरःस्वयम् ॥ २५ ॥ भस्मावदातसर्वांगःसर्वलक्षणलक्षितः ॥ त्रिपुंड्रविलसद्भालोरुद्राक्षालंकृताकृतिः ॥२६॥ पद्मपत्रारुणायामविस्तीर्णनयनद्वयः ॥ प्रादुर्भूयत्वदंभोजेतदानीमेवसत्वरम् ॥ २७ ॥ विमोहितश्चभगवानेतदद्भुतमास्तिकाः ॥ आसीदुन्मील्यनयनेविलापंकृतवानहम् ॥ २८ ॥ आसीन्ममाश्रुपातश्चगिरिनिर्झरसंनिभः ॥ एतस्मिन्नेवसमयेश्रुत्वावागशरीरिणी ॥२९॥ व्योम्नःसूतमहाभागगच्छवाराणसींपुरीम् ॥ तत्रासन्मुनयःपूर्वमुपदिष्टास्त्वयाऽधुना ॥ ३० ॥ त्वदुपागमकल्याणंकांक्षंतेविवशाभृशम् ॥ तिष्ठंतितेनिराहाराइतिसाविरराम च ॥ ३१ ॥ ततउत्थायतरसादेवंदेवींचभक्तितः ॥ प्रदक्षिणीकृत्यपुनःप्रणम्यभुविदंडवत् ॥ ३२ ॥ ॥ ॥

॥ २५ ॥ २६ ॥ प्रादुर्भूयेति ॥ भोआस्तिकाःत्वदंभोजेतदानीमेवभगवान्प्रादुर्भूयविमोहितएतदद्भुतमासीदित्युत्तरेणसंबंधः ॥ २७ ॥ २८ ॥ वागिति अशरीरिणीयावागस्तितांव्योम्नःसकाशाच्छ्रुत्वेत्यन्वयः ॥ २९ ॥ तस्याआकारमाह ॥ सूतेति ॥ अधुनेत्युत्तरान्वयि ॥ ३० ॥ सावाक् ॥ ३१ ॥ ३२ ॥

द्विषड्वारमितिपूर्वेणान्वेति ॥ ३३ ॥ ३४ ॥ मुनिशार्दूलंसूतं ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ तेषांमुनीनां ॥ ३९ ॥ ४० ॥ ४१ ॥ भवभक्ताःशिवभ

द्विषड्वारंगुरोराज्ञांविज्ञाप्यशिवयोरथ ॥ क्षेत्रान्निर्गत्यतरसाचत्वारिंशद्दिनांतरे ॥ ३३ ॥ आगतोस्मिमुनिश्रेष्ठाअनु
गृण्हंतुमामिह ॥ मयाकिमद्यवक्तव्यंभवंतस्तद्ब्रुवंतुमे ॥ ३४ ॥ इतिसूतवचःश्रुत्वाऋषयोत्हृष्टमानसाः ॥ अवोचन्मु
निशार्दूलंव्यासंनत्वामुहुर्मुहुः ॥३५॥ ऋषयऊचुः॥सूतसूतमहाभागत्वमस्मद्गुरुरुत्तमः ॥ अतस्त्वांपरिपृच्छामःशिष्ये
षुगुरवःसदा ॥ ३६ ॥ स्निग्धीभावाइतिपुरादर्शितंभवताधुना ॥ विरजाहोमसमयेवामदेव्यमतंपुरा ॥ ३७ ॥ सू
चितंभवतास्माभिर्नश्रुतंविस्तरान्मुने ॥ तदिदानींश्रोतुकामावयंतद्वक्तुमर्हसि ॥ ३८ ॥ इतितेषांवचःश्रुत्वासूतोत्हृष्ट
तनूरुहः ॥ नमस्कृत्वामहादेवंदेवींव्यासंचभक्तितः ॥ ३९ ॥ प्राहगंभीरयावाचामुनीनाल्हादयन्निदम् ॥ सूतउवाच
॥ स्वस्त्यस्तुमुनयःसर्वेसुखिनःसंतुसर्वदा ॥ ४० ॥ तदतीवविचित्रंहिश्रुतंगुरुमुखांबुजात् ॥ इतःपूर्वंमयानोक्तंगुह्य
प्राकट्यशंकया ॥ ४१ ॥ यूयंखलुमहाभागाभवभक्तादृढव्रताः ॥ इतिनिश्चित्ययुष्माकंवक्ष्यामिश्रूयतांमुदा ॥ ४२॥
पुरारथंतरेकल्पेवामदेवोमहामुनिः ॥ गर्भमुक्तःशिवज्ञानविदांगुरुतमःस्वयम् ॥ ४३ ॥ वेदागमपुराणादिसर्वशास्त्रा
र्थतत्ववित् ॥ देवासुरमनुष्यादिजीवानांजन्मकर्मवित् ॥ ४४ ॥ भस्मावदातसर्वांगोजटामंडलमंडितः ॥ निराश्र
योनिस्पृहश्चनिर्द्वंद्वोनिरहंकृतिः ॥ ४५ ॥ दिगंबरोवीतभयोमहेश्वरइवापरः ॥ शिष्यभूतैर्मुनींद्रैश्चताद्दशैःपरिवारि
तः ॥ ४६ ॥ पर्यटन्पृथिवीमेनांस्वपादस्पर्शपुण्यतः ॥ पवित्रयन्परेधाम्निनिमग्नत्हृदयोऽन्वहम् ॥ ४७ ॥ कुमारशि
खरंमेरोर्दक्षिणंप्राविशन्मुदा ॥ तत्रास्तेभगवानीशतनयःशिखिवाहनः ॥ ४८ ॥ ज्ञानशक्तिधरोवीरःसर्वासुरविम
र्दनः ॥ गजावल्लीसमायुक्तःसर्वदेवैर्नमस्कृतः ॥ ४९ ॥ तत्रस्कंदसरोनामसरःसागरसंनिभम् ॥ शिशिरस्वादुपा
नीयंस्वच्छागाधबहूदकम् ॥ सर्वाश्चर्यगुणोपेतंविद्यतेस्वामिसन्निधौ ॥ ५० ॥ ॥ ॥

क्ताः ॥ ४२ ॥ ४३ ॥ जन्मकर्मवित् ॥ जन्मनोहेतुभूतंयत्कर्मतस्यवेत्ता ॥ ४४ ॥ ४५ ॥ ४६ ॥ परेधाम्निपरब्रह्मणि ॥ यंप्राप्यननिवर्तंतेतद्धामपरमंम
मेत्युक्तेः ॥ ४७ ॥ कुमारशिखरंएतन्नाम्नाप्रसिद्धंमेरोर्दक्षिणशृंगं ॥४८॥ गजावल्लीस्कंदशक्तिः ॥४९॥ तत्रशिखरे॥स्वामिसन्निधौषडाननसमीपे ॥५०॥

॥ ५१ ॥ ५२ ॥ शक्तिरत्नद्वयोपास्यंरत्नभूतेयेद्वेशक्तीताभ्यामुपास्यं ॥ ५३ ॥ प्रणवार्थायप्रणवप्रतिपाद्याय ॥ प्रणवाक्षरपीठायप्रणवाक्षराण्येवपीठमास नंयस्यतस्मै ॥ ५४ ॥ वेदांतार्थस्वरूपायउपनिपत्प्रतिपाद्याय ॥ तंत्वौपनिषदंपुरुषंपृच्छामीतिश्रुतेः ॥ विदितायेति ॥ मतिवुद्धीतिक्तः ॥ ५५ ॥ गुहासु जीववुद्धिपुनिहितायउपास्यत्वेनस्थिताय ॥ योवेदनिहितंगुहायांपरमेव्योमन्नित्यादिश्रुतेः ॥ अतएवगुहायेत्याद्युक्तं ॥ ५६ ॥ अणोरिति ॥ अणोरप्यणुत

तत्रस्नात्वावामदेवःसहशिष्यैर्महामुनिः ॥ कुमारशिखराधीशंमुनिवृंदनिषेवितम् ॥ ५१ ॥ उद्यदादित्यसंकाशंमयूर वरवाहनम् ॥ चतुर्भुजमुदारांगंमुकुटादिविभूषितम् ॥ ५२ ॥ शक्तिरत्नद्वयोपास्यंशक्तिकुक्कुटधारिणम् ॥ वरदाभ यहस्तंचदृष्ट्वास्कंदंमुनीश्वरः ॥ संपूज्यपरयाभक्त्यास्तोतुंसमुपचक्रमे ॥ ५३ ॥ वामदेवउवाच ॥ ओंनमःप्रणवार्था यप्रणवार्थविधायिने ॥ प्रणवाक्षरपीठायप्रणवायनमोनमः ॥ ५४ ॥ वेदांतार्थस्वरूपायवेदांतार्थविधायिने ॥ वेदां तार्थविदांनित्यंविदितायनमोनमः ॥ ५५ ॥ नमोगुहायभूतानांगुहासुनिहितायच ॥ गुह्यायगुह्यरूपायगुह्यागम विदेनमः ॥ ५६ ॥ अणोरणीयसेतुभ्यंमहतोपिमहीयसे ॥ नमःपरावरज्ञायपरमात्मस्वरूपिणे ॥ ५७ ॥ स्कंदाय स्कंदरूपायसिंदूरारुणतेजसे ॥ नमोमंदारमालोद्यन्मुकुटादिभृतेसदा ॥५८॥ शिवशिष्यायपुत्रायशिवस्यशिवदा यिने ॥ शिवप्रियायशिवयोरानंदनिधयेनमः ॥ ५९ ॥ गांगेयायनमस्तुभ्यंकार्तिकेयायधीमते ॥ मातृपुत्रायमहते शरकाननशायिने ॥ ६० ॥ षडक्षरशरीरायषड्विधार्थविधायिने ॥ षडध्वातीतरूपायषण्मुखायनमोनमः ॥ ६१ ॥ द्वादशायतनेत्रायद्वादशायतबाहवे ॥ द्वादशायुधधारायद्वादशात्मन्नमोस्तुते ॥ ६२ ॥ चतुर्भुजायशांतायशक्तिकुक्कु टधारिणे ॥ वरदाभयहस्तायनमोसुरविदारिणे ॥ ६३ ॥ गजावल्लीकुचालिप्तकुंकुमांकितवक्षसे ॥ नमोगजानना नंदगरिमानंदितात्मने ॥ ६४ ॥ ब्रह्मादिदेवऋषिकिन्नरगीयमानगाथाविशेषसुविचित्रितकीर्तिधाम्ने ॥ वृंदारकाम लकिरीटविभूषणस्रक्पुंजाभिरामपदपंकजतेनमोस्तु ॥ ६५ ॥ ॥ ॥ ॥

माय ॥ अणोरणीयान्महतोमहीयानात्मागुहायांनिहितोस्यजंतोरित्यादिश्रुतेः ॥ ५७ ॥ स्कंदरूपायअसुरशक्तिशोषणस्वरूपाय ॥ ५८ ॥ ५९ ॥ मातृ पुत्रायमातृणांब्राम्ह्यादिसप्तमातृप्रभृतीनांपुत्रवद्वल्लभाय ॥ ६० ॥ षड्विधेति ॥ षड्विधामंत्रयंत्रादयःपूर्वोक्तायेर्थास्तद्विधायिनइत्यर्थः ॥ ६१ ॥ द्वादशात्म न्निति ॥ द्वादशनेत्रादियुक्तत्वात्द्वादशात्मत्वंअथवासूर्यरूप ॥६२॥६३॥ गजावल्लीस्कंदशक्तिः ॥ गजाननानंदेति ॥ भ्रातृवात्सल्यादितिभावः॥६४॥६५॥

॥ ६६ ॥ तस्यस्कंदस्य ॥ ६७ ॥ तंवामदेवं ॥ ६८ ॥ नविद्यतइति ॥ परिपूर्णत्वादेवेतिभावः ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ वक्तुमिति ॥ असमर्थइतिशेषः ॥ ७३ ॥ प्रेरितइति ॥ भवतेतिशेषः ॥ ७४ ॥ परमेश्वरवाचकःतस्यवाचकःप्रणवइतिपातंजलसूत्रात् ॥ पशूनांजीवानां ॥ ७५ ॥ वाचकेन



इतिस्तुत्वावामदेवोदेवंसेनापतिंप्रभुम् ॥ प्रदक्षिणत्रयंकृत्वाप्रणम्यभुविदंडवत् ॥ ६६ ॥ साष्टांगंचपुनःकृत्वाप्रदक्षिणनमस्कृतीः ॥ अभवत्पार्श्वतस्तस्यविनयावनतोद्विजाः ॥ ६७ ॥ तमुवाचमहासेनःप्रीतोऽस्मितवपूजया ॥ भक्त्यास्तुत्याचभद्रंतेकिमद्यकरवाण्यहम् ॥ ६८ ॥ मुनेत्वंयोगिनांमुख्यःपरिपूर्णश्चनिस्पृहः ॥ भवादृशांहिलोकेऽस्मिन्प्रार्थनीयंनविद्यते ॥ ६९ ॥ तथापिलोकरक्षार्थैविचरंतिहिसाधवः ॥ श्रोतव्यमस्तिचेद्ब्रह्मन्वक्तुमर्हसिसांप्रतम् ॥ ७० ॥ तदिदानीमहंवक्ष्येलोकानुग्रहहेतवे ॥ इतिस्कंदवचःश्रुत्वावामदेवोमहामुनिः ॥ ७१ ॥ प्रश्रयावनतःप्राहप्रेमगद्गदयागिरा ॥ भगवन्परमेशस्त्वंपरावरविभूतिदः ॥ ७२ ॥ सर्वज्ञःसर्वकर्ताचसर्वशक्तिधरःप्रभुः ॥ जीवावयंतुतेवकुंसन्निधौपरमेशितुः ॥ ७३ ॥ तथाप्यनुग्रहीतव्याविज्ञानलवमात्रतः ॥ प्रेरितःपरिपृच्छामिक्षंतव्योऽतिक्रमोमम ॥ ७४ ॥ प्रणवोहिपरःसाक्षात्परमेश्वरवाचकः ॥ वाच्यःपशुपतिर्देवःपशूनांपाशमोचकः ॥ ७५ ॥ वाचकेनसमाहूतःपशून्मोचयतिक्षणात् ॥ तस्माद्वाचकतासिद्धिःप्रणवेनशिवंप्रति ॥ ७६ ॥ ओमितीदंसर्वमितिश्रुतिराहसनातनी ॥ ओमितिब्रह्मसर्वंवैब्रह्मेतिचसमब्रवीत् ॥ ७७ ॥ देवसेनापतेतुभ्यंदेवानांपतयेनमः ॥ नमःपतीनांपतयेपरिपूर्णायतेनमः ॥ ७८ ॥ एवंस्थितेजगत्यस्मिन्शिवादन्यन्नविद्यते ॥ समष्टिव्यष्टिभावेनप्रणवार्थःश्रुतोमया ॥ ७९ ॥ नजातुचिन्महासेनतमर्थंवक्तुमर्हसि ॥ उपदेशविधानेनसदाचारक्रमेणच ॥ ८० ॥ स्वाम्येवसर्वजंतूनांपाशछेदकरोगुरुः ॥ अतस्त्वत्कृपयासोर्थःश्रोतव्योहिमयागुरो ॥ ८१ ॥ ॥ ॥ ॥

प्रणवेनसमाहूतःसमाकारितःउपासितइतियावत् ॥ तस्मादिति ॥ शिवंप्रतिप्रणवोपासनामात्रेणपशुपाशमोचनात्प्रणवस्यवाचकतासिद्धिरित्यर्थः ॥ ७६ ॥ वाचकत्वादेवप्रणवस्येश्वरतादात्म्यंश्रुतिःप्रतिपादयतीत्याह ॥ ओमितीति ॥ ७७ ॥ ७८ ॥ श्रुतइति ॥ मयाजातुचित्कदाचिदपिप्रणवार्थोनश्रुतइत्यन्वयः ॥ ७९ ॥ तमर्थंप्रणवार्थं ॥ ८० ॥ गुरुरिति ॥ असीतिशेषः ॥ ८१ ॥ ॥ ॥ ॥ ॥

मुनिनावामदेवेन ॥ ८२ ॥ इतिश्रीशिवमहापुराणेकैलाससंहिताटीकायांसारबोधिन्यामुपरिभागेसप्तमोऽध्यायः ॥ ७ ॥ ॐनमःशिवाय ॥ ततःस्कंदोमुनिं प्राहप्रणवोपासनाविधिं ॥ नांदीश्राद्धादिसहितमष्टमेतन्निरूप्यते ॥ १ ॥ सुब्रह्मण्यइतिस्कंदनामधेयं ॥ १ ॥ २ ॥ नानाशास्त्रविमोहिताः ॥ नानाशास्त्रे

इतिसमुनिनापृष्टःस्कंदःप्रणम्यसदाशिवंप्रणववपुषंसाष्टत्रिंशत्कलालांछितम् ॥ सहितमुमयाशश्वत्पार्श्वेमुनिप्रव रार्थितंगदितुमुपचक्रामश्रेयःश्रुतिष्वपिगोपितम् ॥ ८२ ॥ इतिश्रीशिवमहापुराणेकैलाससंहितायामुत्तरभागेसप्त मोऽध्यायः ॥ ७ ॥ श्रीसुब्रह्मण्यउवाच ॥ साधुसाधुमहाभागवामदेवमुनीश्वर ॥ त्वमतीवशिवेभक्तःशिवज्ञानवतां वरः ॥ १ ॥ त्वयाह्यविदितंकिंचिन्नास्तिलोकेषुकुत्रचित् ॥ तथापितववक्ष्यामिलोकानुग्रहकारिणः ॥ २ ॥ लोकेऽ स्मिन्पशवःसर्वेनानाशास्त्रविमोहिताः ॥ वंचिताःपरमेशस्यमाययातिविचित्रया ॥ ३ ॥ नजानंतिपरंसाक्षात्प्रणवा र्थंमहेश्वरम् ॥ दक्षिणंबाहुमुत्धृत्यशपथंप्रब्रवीमिते ॥ ४ ॥ सत्यंसत्यंपुनःसत्यंसत्यंसत्यंपुनःपुनः ॥ प्रणवार्थःशि वःसाक्षात्प्राधान्येनप्रकीर्तितः ॥ ५ ॥ यतोवाचोनिवर्तंतेअप्राप्यमनसासह ॥ आनंदंयस्यवैविद्वान्नबिभेतिकुतश्चन ॥ ६ ॥ यस्माज्जगदिदंसर्वंविष्णुरुद्रेंद्रपूर्वकम् ॥ सहभूतेंद्रियग्रामैःप्रथमंसंप्रसूयते ॥ ७ ॥ नसंप्रसूयतेयोवैकुतश्च नकदाचन ॥ यस्मिन्नभासतेविद्युन्नसूर्योनचचंद्रमाः ॥ ८ ॥ यस्यभासाविभातीदंजगत्सर्वंसमंततः ॥ सर्वैश्वर्येणसं पन्नोनाम्नासर्वेश्वरःस्वयम् ॥ ९ ॥ योवैमुमुक्षुभिर्ध्येयःशंभुराकाशमध्यगः ॥ यस्यपुंसःपराशक्तिर्भावगम्यामनोहरा ॥ १० ॥ निर्गुणास्वगुणैरेवनिगूढानिष्कलाशिवा ॥ तदीयंत्रिविधंरूपंस्थूलंसूक्ष्मंपरंततः ॥ ११ ॥ निष्कलःसर्वदे वानामादिदेवःसनातनः ॥ ज्ञानक्रियास्वभावोयःपरमात्मेतिगीयते ॥ १२ ॥ तस्यदेवाधिदेवस्यमूर्तिःसाक्षात्सदा शिवः ॥ पंचमंत्रतनुर्देवःकलापंचकविग्रहः ॥ १३ ॥ ॥ ॥

पुपरस्परविरुद्धसिद्धांतदर्शनेनमोहंप्राप्ताः ॥ ३ ॥ ४ ॥ शपथप्रदर्शनमुखेनपरमेश्वरंश्रुतिवाक्यैर्वर्णयति ॥ सत्यमिति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ निर्गुणाअन्यदीयगुणासंबद्धा ॥ तदेवाह ॥ स्वगुणैरिति ॥ तदीयंतस्यपुंसःसंबंधि ॥ परंसूक्ष्मतरं ॥ ११ ॥ १२ ॥ पंचमंत्रतनुःसद्योजातादिमंत्रपंचक मयशरीरः ॥ कलापंचकंनिवृत्त्यादि ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १४ ॥ प्रदेशवान्एवंभूतमूर्तस्वरूपः ॥ १५ ॥ १६ ॥ शब्दादीति ॥ वेदशब्दादिशक्तिभिःस्फुरितंयद्धृत्पंकजंतत्रविराजितः ॥ १७ ॥ मंत्रादिषाड्विधा
र्थाःपूर्वमुक्ताःतेषांसमष्टिव्यष्टिभावार्थमित्यन्वयः ॥ १८ ॥ मानुषेलोकइत्यन्वयः ॥ १९ ॥ २० ॥ २१ ॥ वर्णाश्रमाचाराएवपुष्पाणितैः ॥ २२ ॥ त

शुद्धस्फटिकसंकाशःप्रसन्नःशीतलद्युतिः ॥ पंचवक्त्रोदशभुजस्त्रिपंचनयनःप्रभुः ॥ १४ ॥ ईशानमुकुटोपेतःपुरुषास्यः पुरातनः ॥ अघोरहृदयोवामदेवगुह्यःप्रदेशवान् ॥ १५ ॥ सद्यपादश्चतन्मूर्तिःसाक्षात्सकलनिष्कलः ॥ सर्वज्ञत्वा दिषट्शक्तिषडंगीकृतविग्रहः ॥ १६॥ शब्दादिशक्तिस्फुरितहृत्पंकजविराजितः ॥ स्वशक्त्यावामभागेतुमनोन्मन्या विभूषितः ॥ १७ ॥ मंत्रादिषड्विधार्थानामर्थोपन्यासमार्गतः ॥ समष्टिव्यष्टिभावार्थंवक्ष्यामिप्रणवात्मकम् ॥ १८॥ उपदेशक्रमोह्यादौवक्तव्यःश्रूयतामयम् ॥ चातुर्वर्ण्यंहिलोकेऽस्मिन्प्रसिद्धंमानुषेमुने ॥ १९ ॥ त्रैवर्णिकानामेवात्रश्रु त्याचारसमन्वयः ॥ शुश्रूषामात्रसाराहिशूद्राःश्रुतिबहिष्कृताः ॥ २० ॥ त्रैवर्णिकानांसर्वेषांस्वस्वाश्रमरतात्मनाम् श्रुतिस्मृत्युदितोधर्मोऽनुष्ठेयोनापरःक्वचित् ॥ २१ ॥ श्रुतिस्मृत्युदितंकर्मकुर्वन्सिद्धिमवाप्स्यति ॥ वर्णाश्रमाचारपु ष्पैरभ्यर्च्यपरमेश्वरम् ॥ २२ ॥ तत्सायुज्यंगताःसर्वेबहवोमुनिसत्तमाः ॥ ब्रह्मचर्येणऋषयोदेवायज्ञक्रियाध्वना॥ ॥ २३ ॥ पितरःस्वधयातृप्ताइतिहिश्रुतिरब्रवीत् ॥ एवंऋणत्रयान्मुक्तोवानप्रस्थाश्रमंगतः ॥ २४ ॥ शीतोष्णसुख दुःखादिसहिष्णुर्विजितेंद्रियः ॥ तपस्वीविजिताहारोयमाद्यंयोगमभ्यसेत् ॥ २५ ॥ यथादृढतराबुद्धिरविचाल्याभवे त्तथा ॥ एवंक्रमेणशुद्धात्मासर्वकर्माणिविन्यसेत् ॥ २६ ॥ सन्यस्यसर्वकर्माणिज्ञानपूजापरोभवेत् ॥ साहिसाक्षा च्छिवैक्येनजीवन्मुक्तिफलप्रदा ॥ २७ ॥ सर्वशास्त्रार्थतत्त्वज्ञंवेदांतज्ञानपारगम् ॥ आचार्यमुपसंगम्ययतिंमतिमतां वरम् ॥ २८ ॥ दीर्घदंडप्रणामाद्यैस्तोषयेद्यत्नतःसुधीः ॥ योगुरुःसशिवःप्रोक्तोयःशिवःसगुरुःस्मृतः ॥ २९ ॥

त्सायुज्यंपरमेश्वरसायुज्यं ॥ ब्रह्मचर्येणेति ॥ त्रिभिर्ऋणवाजायतेब्रह्मचर्येणर्षिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यइत्यादिश्रुतिरब्रवीदित्यर्थः ॥ २३ ॥ २४ ॥
यमाद्यं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपं ॥ २५ ॥ सर्वकर्माणिकाम्यानि ॥ २६ ॥ साज्ञानमयीपूजा ॥ २७ ॥ २८ ॥ २९ ॥

स्वविचारंप्रणवोपासनाविषयकं ॥ निवेद्येति ॥ गुरवेइतिशेषः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ दिव्यश्राद्धेदिव्योपपादुकाख्यदेवश्राद्धे ॥ दिव्योपपादुकादेवाइत्यमरः ॥ ३४ ॥ भूतग्रामःप्राणिसमूहः ॥ चतुर्विधःजरायुजांडजस्वेदजोद्भिज्जभेदाच्चतुष्प्रकारः ॥ ३५ ॥ पितेति ॥ पितृपितामहप्रपितामहाइत्यर्थः

इतिनिश्चित्यमनसास्वविचारंनिवेद्यच ॥ लब्धानुज्ञस्तुगुरुणाद्वादशाहंपयोव्रती ॥ ३० ॥ शुक्लपक्षेचतुर्थ्यांवादशम्यांवाविधानतः ॥ प्रातःस्नात्वाविशुद्धात्माकृतनित्यक्रियःसुधीः ॥ ३१ ॥ गुरुमाहूयविधिनानांदीश्राद्धंसमारभेत् ॥ विश्वेदेवाःसत्यवसुसंज्ञावंतःप्रकीर्तिताः ॥ ३२ ॥ देवश्राद्धेब्रह्मविष्णुमहेशाःकथितास्त्रयः ॥ ऋषिश्राद्धेतुसंप्रोक्तादेवक्षेत्रमनुष्यजाः ॥ ३३ ॥ दिव्यश्राद्धेतुवसुरुद्रादित्याःसंप्रकीर्तिताः ॥ चत्वारोमानुषश्राद्धेसनकाद्यामुनीश्वराः ॥ ॥ ३४ ॥ भूतश्राद्धेपंचमहाभूतानिचततःपरम् ॥ चक्षुरादींद्रियग्रामोभूतग्रामश्चतुर्विधः ॥ ३५ ॥ पितृश्राद्धेपितातस्यपितातस्यपितात्रयः ॥ मातृश्राद्धेमातृपितामह्यौचप्रपितामही ॥ ३६ ॥ आत्मश्राद्धेतुचत्वारआत्मापितृपितामहौ ॥ प्रपितामहनामाचसपत्नीकाःप्रकीर्तिताः ॥ ३७ ॥ मातामहात्मकश्राद्धेत्रयोमातामहादयः ॥ प्रतिश्राद्धंब्राह्मणानांयुग्मंकृत्वोपकल्पितान् ॥ आहूयपादौप्रक्षाल्यस्वयमाचम्ययत्नतः ॥ ३८ ॥ समस्तसंपत्समवाप्तिहेतवःसमुत्थितापत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवःपुनंतुमांब्राह्मणपादपांसवः ॥ ३९ ॥ आपद्घनध्वांतसहस्रभानवःसमीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थांबुपवित्रमूर्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥ ४० ॥ इतिजप्त्वानमस्कृत्यसाष्टांगंभुविदंडवत् ॥ स्थित्वाथप्राङ्मुखःशंभोःपादाब्जयुगलंस्मरन् ॥ ४१ ॥ सपवित्रकरःशुद्धउपवीतीदृढासनः ॥ प्राणायामत्रयंकृत्वाश्रुत्वातिथ्यादिकंपुनः ॥ ४२ ॥ मत्संन्यासांगभूतंयद्वैश्वदेवादिकंक्रमात् ॥ श्राद्धमष्टविधंमातामहांतंपार्वणेनवै ॥ ४३ ॥ विधानेनकरिष्यामियुष्मदाज्ञापुरःसरम् ॥ एवंविधायसंकल्पंदर्भानुत्तरतस्त्यजेत् ॥ ४४ ॥ उपस्पृश्याथउत्थायवरणक्रममारभेत् ॥ पवित्रपाणिःसंस्पृश्यपाणीब्राह्मणयोर्वदेत् ॥ ४५ ॥ विश्वेदेवार्थइत्यादिभवद्भ्यांक्षणइत्यपि ॥ प्रसादनीयइत्यंतंसर्वत्रैवंविधिक्रमः ॥ ४६ ॥ ॥ ॥

॥ ३६ ॥ आत्मश्राद्धेजीवतएवात्मनःश्राद्धे ॥ ३७ ॥ ३८ ॥ ब्राह्मणप्रार्थनामंत्रावाह ॥ समस्तेति ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ अष्टविधमिति ॥ पूर्वोक्तदेवश्राद्धादिभेदेनेतिभावःमातामहांतंनवमं ॥ ४३ ॥ ४४ ॥ ब्राह्मणयोःपाणीसंस्पृश्येत्यन्वयः ॥ ४५ ॥ ४६ ॥ ॥

दशेति ॥ दशमंडलानिप्रकल्पयेदित्यन्वयः ॥ ४७ ॥ तेषुमंडलेषु ब्राह्मणान्संस्थाप्योपवेश्यपादयोरक्षतैरभ्यर्चनंकृत्वेतिसंबंधः ॥ ४८ ॥ ४९ ॥ ५० ॥ ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ उदमुदकं ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ श्रीरुद्रंनमस्तेरुद्रेत्यादिकंरुद्राध्यायं ॥ चमकंअग्नाविष्णूसजोष



एवंसमाप्यवरणंमंडलानिप्रकल्पयेत् ॥ उदगारभ्यदशचकृत्वाभ्यर्चनमक्षतैः ॥ ४७ ॥ तेषुक्रमेणसंस्थाप्यब्राह्मणान्पादयोःपुनः ॥ विश्वेदेवस्वरूपस्यब्राह्मणस्येदमासनम् ॥ ४८ ॥ इतिदर्भासनंदत्वादर्भपाणिःस्वयंस्थितः ॥ अस्मिन्नांदीमुखश्राद्धेविश्वेदेवार्थइत्यपि ॥ ४९ ॥ भवद्भ्यांक्षणइत्युक्त्वाक्रियतामितिसंवदेत् ॥ प्राप्नुतामितिसंप्रोच्यभवंतावितिसंवदेत् ॥ ५० ॥ वदेतांप्राप्नवावेतितौचब्राह्मणपुंगवौ ॥ संपूर्णमस्तुसंकल्पसिद्धिरस्त्वितितान्प्रति ॥ ५१ ॥ भवंतोनुगृण्हंत्वितिप्रार्थयेद्द्विजपुंगवान् ॥ ततःशुद्धकदल्यादिपात्रेषुक्षालितेषुच ॥ ५२ ॥ अन्नादिभोज्यद्रव्याणिदत्वादर्भैःपृथक्पृथक् ॥ परिस्तीर्यस्वयंतत्रपरिषिच्योदकेनच ॥ ५३ ॥ हस्ताभ्यामवलंब्याथपात्रंप्रत्येकमादरात् ॥ पृथिवितेपात्रमित्यादिकृत्वातत्रव्यवस्थितान् ॥ ५४ ॥ देवादींश्चचतुर्थ्यंतानन्नूद्याक्षतसंयुतम् ॥ उदंगृहीत्वास्वाहेतिदेवायान्नंत्यजेत्पुनः ॥ ५५ ॥ नममेतिवदेदंतेसर्वत्रायंविधिक्रमः ॥ यत्पादपद्मस्मरणाद्यच्छ्रीनामजपादपि ॥ ५६ ॥ न्यूनंकर्मभवेत्पूर्णंतंवंदेसांबमीश्वरम् ॥ इतिजप्त्वाततोब्रूयान्मयाकृतमिदंपुनः ॥ ५७ ॥ नांदीमुखश्राद्धमितियथोक्तंचवदेत्ततः ॥ अस्त्वितिब्रूतेतिचतान्प्रसाद्यद्विजपुंगवान् ॥ ५८ ॥ विसृज्यस्वकरस्थोदंप्रणम्यभुविदंडवत् ॥ उत्थायचततोब्रूयादमृतंभवतुद्विजान् ॥ ५९ ॥ श्रीरुद्रंचमकंसूक्तंपौरुषंचयथाविधि ॥ चित्तेसदाशिवंध्यात्वाजपेद्ब्रह्माणिपंचच ॥ ६० ॥ भोजनांतेरुद्रसूक्तंसमापय्यद्विजान्पुनः ॥ तन्मंत्रेणततोदद्यादुत्तरापोशनंपुनः ॥ ६१ ॥ प्रक्षालितांघ्रिराचम्यपिंडस्थानंव्रजेत्स्वयम् ॥ आसीनःप्राङ्मुखोमौनीप्राणायामत्रयंचरेत् ॥ ६२ ॥ नांदीमुखोक्तश्राद्धांगंकरिष्येपिंडदानकम् ॥ इतिसंकल्प्यदक्षादिसमारभ्योदगंतकम् ॥ ६३ ॥ नवरेखाःसमालिख्यप्रागग्राद्द्वंद्वशःक्रमात् ॥ सुस्तीर्यदर्भान्दक्षादिदेवादिस्थानपंचके ॥ ६४ ॥ ॥ ॥ ॥



सेत्येकादशानुवाकान् ॥ पौरुषंसहस्रशीर्षापुरुषइत्यादिकं ॥ ६० ॥ तन्मंत्रेणअमृतापिधानमसीत्यनेन ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥

॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ तान्ब्राह्मणान् ॥ ७१ ॥ उचितैर्योग्यैरिष्टैः ॥ ७२ ॥ विसृज्येति ॥ सप्ताष्टकेशान्विसृज्यविहाय

तूष्णींदद्यात्साक्षतोदंत्रिषुस्थानेषुचक्रमात् ॥ स्थानेष्वन्येषुमातृषुमार्जयैतांततःपरम् ॥ ६५ ॥ अत्रेतिपितरःपश्चा
त्साक्षतोदंसमर्प्यंच ॥ दद्यात्ततःक्रमेणैवदेवादिस्थानपंचके ॥६६॥ तत्तद्देवादिनामानिचतुर्थ्यंतान्युदीर्यच॥पिंडवर्यंत
तोदद्यात्प्रत्येकंस्थानपंचके ॥ ६७ ॥ तूष्णींदद्यात्साक्षतोदंपित्रादिस्थानपंचके ॥ स्वगृह्योक्तेनमार्गेणदद्यात्पिंडान्
पृथक्पृथक् ॥६८॥ दद्यादुदंसाक्षतंचततःसाद्गुण्यहेतवे ॥ ध्यात्वासदाशिवंदेवंत्वृदयांभोजमध्यतः ॥ ६९ ॥ यत्पाद
पद्मस्मरणादितिश्लोकंपठेत्पुनः ॥ नमस्कृत्यब्राह्मणेभ्योदक्षिणांचस्वशक्तितः ॥ ७० ॥ दत्वाक्षमापय्यचतान्विसृ
ज्यचततःक्रमात् ॥ पिंडानुत्सृज्यगोग्रासंदद्यान्नोचेज्जलेक्षिपेत् ॥ ७१ ॥ पुण्याहवाचनंकृत्वाभुंजीयादुचितैःसह ॥
अन्येद्युःप्रातरुत्थायकृतनित्यक्रियःसुधीः॥७२॥उपोष्यक्षौरकर्मादिकक्षोपस्थविवर्जितम् ॥ केशश्मश्रुनखान्येवक
र्मांवधिविसृज्यच ॥ ७३ ॥ सप्ताष्टकेशान्विधिवत्कारयित्वाविधानतः ॥ स्नात्वाधौतपटःशुद्धोद्विराचम्याथवाग्यतः
॥ ७४ ॥ भस्मसंधार्यविधिनाकृत्वापुण्याहवाचनम् ॥ तेनसंप्रोक्षणंप्राप्यशुद्धदेहस्वभावतः ॥ ७५ ॥ होमद्रव्या
र्थमाचार्यदक्षिणार्थंविहायच ॥ द्रव्यजातंमहेशायद्विजेभ्यश्चविशेषतः ॥ ७६ ॥ भक्तेभ्यश्चप्रदत्वाथशिवायगुरुरू
पिणे ॥ वस्त्रादिदक्षिणांदत्वाप्रणम्यभुविदंडवत् ॥ ७७ ॥ दोरकौपीनवसनंदंडाद्यंक्षालितंशुचि ॥ आदायहोमद्र
व्याणिसमिदादीनिचक्रमात् ॥ ७८ ॥ समुद्रतीरेनद्यांवापर्वतेवाशिवालये ॥ अरण्येवाथगोष्ठेवाविचार्यस्थानमुत्त
मम् ॥ ७९ ॥ स्थित्वाचम्यततःपूर्वंकृत्वामानसमंजरीं ॥ ब्राह्ममोंकारसहितंनमोब्रह्मणइत्यपि ॥ ८० ॥ जपित्वा
त्रिस्ततोब्रूयादग्निमीळेपुरोहितम् ॥ अथमहाव्रतमित्यग्निर्वैदेवानामवमः ॥ ८१ ॥ अथैतस्यसमाम्नायमिषेत्वोर्जेत्वा
चेतितत् ॥ अग्नआयाहिवीतयेशंनोदेवीराभिष्टये ॥ ८२ ॥ पश्चात्प्रोच्यमयरसतजभनगलैःसह ॥ संमितंचततःपं
चसंवत्सरमयंततः ॥ ८३ ॥ ॥ ॥ ॥ ॥ ॥

क्षौरकर्मादिकारयित्वेत्यन्वयः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ मानसमंजरींमानसजपात्मिकांमंजरीं ॥ ब्राह्मंब्रह्ममंत्रं ॥ ८० ॥
जपार्थसांगोपांगवेदचतुष्टयादिप्रतीकान्याह ॥ अग्निमीळेइत्यादिभिः ॥ ८१ ॥ ८२ ॥ ८३ ॥ ॥ ॥

॥ ८४ ॥ वेदादीनिति ॥ अग्निमीळइत्यादिनोक्तानामेववेदादिभागमात्राणामनुकल्पप्रदर्शनार्थोयमनुवादः ॥ केवलान्वेदादीनपिवासंजपेदित्यर्थः यद्वावेदादीनुपवेदादीन् ॥ ८५ ॥ ८६ ॥ चतुर्थ्यंतमिति ॥ ओंब्रह्मणेनमइत्यादिकंचतुर्थीविभक्त्यंतंसंजपेदितिपूर्वेणान्वयः ॥ ८७ ॥ नाभिंसंस्पृशन्नित्यन्वयः॥ वक्ष्यमाणान्ओंआत्मनेनमइत्यादिकान् ॥ ८८ ॥ ८९ ॥ स्वाहांतानिति ॥ ओंआत्मनेस्वाहेत्यादिकान् ॥ ९० ॥ प्रागास्यःप्राङ्मुखः ॥ ९१ ॥ इ



समांम्नायःसमाम्नातःअथशिक्षांवदेत्पुनः ॥ प्रवक्ष्यामीत्युदीर्याथवृद्धिरादैच्चसंवदेत् ॥ ८४ ॥ अथातोधर्मजिज्ञासेत्युच्चार्यपुनरंजसा ॥ अथातोब्रह्मजिज्ञासावेदादीनपिसंजपेत् ॥ ८५ ॥ ब्रह्माणमिंद्रंसूर्यंचसोमंचैवप्रजापतिम् ॥ आत्मानमंतरात्मानंज्ञानात्मानमतःपरम् ॥ ८६ ॥ परमात्मानमपिचप्रणवाद्यंनमोंतकम् ॥ चतुर्थ्यंतंनमिलाथसक्तुमुष्टिंप्रगृह्यच ॥ ८७ ॥ प्राश्याथप्रणवेनैवद्विराचम्याथसंस्पृशन् ॥ नाभिंमंत्रान्वक्ष्यमाणान्प्रणवाद्यान्नमोंतकान् ॥ ८८ ॥ आत्मानमंतरात्मानंज्ञानात्मानंपरंपुनः ॥ आत्मानंचसमुच्चार्यप्रजापतिमतःपरम् ॥ ८९ ॥ स्वाहांतान्प्रजपेत्पश्चात्पयोदधिघृतंपृथक् ॥ त्रिवारंप्रणवेनैवप्राश्याचम्यद्विधापुनः ॥ ९० ॥ प्रागास्यउपविश्याथप्राणायामत्रयंचरेत् ॥ ९१ ॥ इतिश्रीशिवमहापुराणेकैलाससंहितायामुत्तरभागेऽष्टमोऽध्यायः ॥ ८ ॥ छ ॥ श्रीसुब्रह्मण्य उवाच ॥ अथमध्यान्हसमयेस्नात्वानियतमानसः ॥ गंधपुष्पाक्षतादीनिपूजाद्रव्याण्युपाहरेत् ॥ १ ॥ नैर्ऋतेपूजयेद्देवंविघ्नेशंविधिपूजितम् ॥ गणानांत्वेतिमंत्रेणसमावाह्यविधानतः ॥ २ ॥ रक्तवर्णंमहाकायंसर्वाभरणभूषितम् ॥ पाशांकुशाक्षाभीष्टंचदधानंकरपंकजैः ॥ ३ ॥ गजाननंप्रभुंध्यात्वागंधादिभिरनुक्रमात् ॥ अभ्यर्च्यपायसापूपनारिकेरगुडादिभिः ॥ ४ ॥ परितोष्यनमस्कृत्यानिर्विघ्नंप्रार्थयेत्ततः ॥ औपासनाग्नौकर्तव्यंस्वगृह्योक्तविधानतः ॥ ५ ॥ आज्यभागांतमग्नेर्यन्मुखतंत्रमतःपरम् ॥ भूःस्वाहेतिस्रुचापूर्णाहुतिंहुत्वासमाप्यच ॥ ६ ॥ ॥

तिश्रीशिवमहापुराणेकैलाससंहितटीकायांसारबोधिन्यामुत्तरभागेऽष्टमोऽध्यायः ॥ ८ ॥ ओंनमःशिवाय ॥ गुरूपदिष्टमार्गेणप्रणवोपासनाविधिः॥ससन्यासविधिःसम्यङ्नवमेत्रनिरूप्यते ॥ १ ॥ ॥ १ ॥ २ ॥ अभीष्टंवरः ॥ ३ ॥ ४ ॥ ५ ॥ आज्यभागांतमिति ॥ आज्यभागहोमांतंयदग्निमुखतंत्रंतदौपासनाग्नौकर्तव्यमतःपरंभूःस्वाहेतिमंत्रेणपूर्णाहुतिंहुत्वातंत्रंसमाप्यगायत्रींप्रजपेदित्यन्वयः ॥ ६ ॥ ॥ ॥

यावदपराण्हमपराण्हसमाप्तिपर्यंतं ॥ ७ ॥ तस्मिन्नौपासनाग्नौ ॥ ८ ॥ रौद्रेणसूक्तेनपरिणोरुद्रस्यहेतिःस्तुहिश्रुतमित्युक्तेनषडृचात्मकेन ॥ ब्रह्मभिःमंत्रैः ॥ ९ ॥ १० ॥ तंत्रमिति ॥ समाप्येतिशेषः ॥ ११ ॥ गायत्रीमिति ॥ गायत्रींजपेदितिपूर्वेणान्वयः ॥ १२ ॥ १३ ॥ १४ ॥ प्रणवादिकान् ॥

गायत्रींप्रजपेद्यावदपराण्हमतंद्रितः ॥ अथसायंतनींसंध्यामुपास्यस्नानपूर्वकम् ॥ ७ ॥ सायमौपासनंहुत्वागुरुंविज्ञाप्यवाग्यतः ॥ श्रपयित्वाचरुंतस्मिन्त्समिदन्नाज्यभेदतः ॥८॥ हुत्वारौद्रेणसूक्तेनसद्योजातादिपंचभिः ॥ ब्रह्मभिश्चमहादेवंसांबंवन्हौविभावयेत् ॥ ९ ॥ गौरीमिमायमंत्रेणहुत्वागौरीमनुस्मरन् ॥ ततोग्नयेस्विष्टकृतेस्वाहेतिजुहुयात्सकृत् ॥ १० ॥ हुत्वोपरिष्टात्तंत्रंतुततोऽग्नेरुत्तरेबुधः ॥ स्थित्वासनेजपेन्मौनीचैलाजिनकुशोत्तरे ॥ ११ ॥ यावद्ब्राह्ममुहूर्त्ततुगायत्रींदृढमानसः ॥ ततःस्नात्वात्वशक्तश्चेद्भस्मनावाविधानतः ॥ १२ ॥ श्रपयित्वाचरुंतस्मिन्नग्नावेवाभिघारितम् ॥ उदगुद्वास्यबर्हिष्यासाद्याज्येनततश्चरुम् ॥ १३ ॥ अभिघार्यव्याहृतीश्चरौद्रसूक्तंचपंचच ॥ जपेद्ब्रह्माणिसंधार्यचित्तंशिवपदांबुजे ॥ १४ ॥ प्रजापतिमथैंद्रंचविश्वान्देवास्ततःपरम् ॥ ब्रह्माणंचचतुर्थ्यंतंस्वाहांतान्प्रणवादिकान् ॥ १५ ॥ संजप्यवाचयित्वाथपुण्याहंचततःपरम् ॥ परस्तात्तंत्रमग्नयेस्वाहेत्यग्निमुखावधि ॥ १६ ॥ निर्वर्त्यपश्चात्प्राणायस्वाहेत्यारभ्यपंचभिः ॥ हुत्वाततश्चरौद्रेणसूक्तेनब्रह्मभिःक्रमात् ॥ १७ ॥ स्वशाखाक्रमतोहुत्वासमिदन्नाज्यभेदतः ॥ महेशादिचतुर्व्यूहंस्वस्वव्यूहनमंत्रतः ॥ १८ ॥ सशक्तिकमयोहुत्वासमिदन्नाज्यभेदतः ॥ साज्येनचरुणापश्चादग्निंस्विष्टकृतंहुनेत् ॥ १९ ॥ पुनश्चप्रजपेत्सूक्तंरौद्रंब्रह्माणिपंचच ॥ महेशादिचतुर्व्यूहमंत्रांश्चप्रजपन्पुनः ॥ २० ॥ हुत्वोपरिष्टात्तंत्रंतुस्वशाखोक्तेनवर्त्मना ॥ तत्तद्देवान्समुद्दिश्यत्यागंकुर्याद्विचक्षणः ॥ २१ ॥ एवमग्निमुखाद्यंतत्कर्मतंत्रंप्रवर्तितम् ॥ अतःपरंप्रजुहुयाद्विरजाहोममात्मनः ॥ २२ ॥ षड्विंशतत्वरूपेऽस्मिन्देहेलीनस्य शुद्धये ॥ तत्वान्येतानिमद्देहेशुध्यंतामित्यनुस्मरन् ॥ २३ ॥ ॥ ॥ ॥

ओंप्रजापतयेस्वाहेत्याद्याकारकान् ॥ १५ ॥ १६ ॥ प्राणायेति ॥ प्राणायस्वाहापानायस्वाहेत्यादिभिरित्यर्थः ॥ पंचभिर्ब्रह्मभिरित्यन्वयः ॥ १७ ॥ महेशादीति ॥ चतुर्व्यूहपूजनादिप्रकारोवायुसंहितायामुक्तः ॥ १८ ॥ ॥ १९ ॥ पंचसद्यादीनि ॥ २० ॥ २१ ॥ २२ ॥ षड्विंशेति ॥ प्रकृत्यादिषड्विंशतितत्वमयेस्मिन्देहेलीनस्यात्मनःशुद्धयेविरजाहोमंप्रजुहुयादितिपूर्वेणान्वयः ॥ २३ ॥ ॥ ॥ ॥

मंत्रैरिति॥आरुणकेतुकेतैत्तिरीयारण्यकेभद्रप्रपाठकेपठ्यमानैरष्टयेनीमष्टपुत्रामित्याद्यथपुरुषःसत्तपुरुषइत्यंतैर्मंत्रैरित्यर्थः॥ २४ ॥ शोधनार्थंतत्वानितद्भेदां श्चाहपृथिव्यादीति ॥ २५॥ श्रोत्राद्यमिति ॥ पंचकमितिसंवध्यते ॥ २६ ॥ २७ ॥ पुरुषस्यत्विति ॥ भोक्तृत्वंप्रतिपन्नस्यपुरुषस्यतुभोजनेभोगार्थंतत्वपंच कमंतरंगतयापरिकीर्तितमित्यग्रिमेणान्वयः ॥ २८ ॥ तदेवतत्वपंचकमाह ॥ नियतिरिति ॥ कालरागःकालसहितोरागः ॥ २९ ॥ ३० ॥ तज्जानिप्रकृ

तत्रात्मतत्वशुध्यर्थंमंत्रैरारुणकेतुके ॥ पठ्यमानैःपृथिव्यादिपुरुषांतक्रमान्मुने ॥ २४ ॥ साज्येनचरुणामौनीशिव पादाबुजंस्मरन् ॥ पृथिव्यादिचशब्दादिवागाद्यंपंचकंपुनः ॥ २५ ॥ श्रोत्राद्यंचशिरःपार्श्वपृष्ठोदरचतुष्टयम् ॥ जं घांचयोजयेत्पश्चात्त्वगाद्यंधातुसप्तकम् ॥ २६ ॥ प्राणाद्यंपंचकंपश्चादन्नाद्यंकोशपंचकम् ॥ मनोरेतश्चबुद्धिश्चाहंकृ तिःख्यातिरेवच ॥ २७ ॥ संकल्पंचगुणाःपश्चात्प्रकृतिःपुरुषस्यतु ॥ भोक्तृत्वंप्रतिपन्नस्यभोजनेचप्रयत्नतः ॥ २८ ॥ अंतरंगतयातत्वपंचकंपरिकीर्तितं ॥ नियतिःकालरागश्चविद्याचतदनंतरम् ॥ २९ ॥ कलाचपंचकमिदंमायोत्पन्नंमुनी श्वर ॥ मायांतुप्रकृतिंविद्यान्मायाश्रुतिरितीरिता ॥ ३० ॥ तज्जान्येतानितत्वानिश्रुत्युक्तानिनसंशयः ॥ कालःस्वभा वोनियतिरितिचश्रुतिरब्रवीत् ॥ ३१ ॥ एतत्पंचकमेवास्यपंचकंचुकमुच्यते ॥ अजानन्पचतत्वानिविद्वानपिविमूढधीः ॥ ॥ ३२ ॥ नियत्यधस्तात्प्रकृतेरुपरिस्थःपुमानयम् ॥ काकाक्षिन्यायमाश्रित्यवर्ततेपार्श्वतोन्वहम् ॥ ३३ ॥ विद्यातत्व मिदंप्रोक्तंशुद्धविद्यामहेश्वरौ ॥ सदाशिवश्चशक्तिश्चशिवश्चेदंतुपंचकम् ॥ ३४ ॥ शिवतत्वमिदंब्रह्मन्प्रज्ञानब्रह्मवा क्यतः ॥ पृथिव्यादिशिवांतंयत्तत्वजातंमुनीश्वर ॥ ३५ ॥ स्वकारणलयद्वाराशुद्धिरस्यविधीयताम् ॥ एकादशानां मंत्राणांपरस्मैपदपूर्वकम् ॥ ३६ ॥ शिवज्योतिश्चतुर्थ्यंतमिदंपदमथोच्चरेत् ॥ नममेतिवदेत्पश्चादुद्देशत्यागईरितः ३७

तिजानि ॥ इतिचइत्यादि ॥ ३१ ॥ विमूढधीरिति ॥ भवेदितिशेषः ॥ ३२ ॥ काकाक्षीति ॥ यथैकमेवकाकाक्षिगोलकद्वयेदर्शनानुकूलव्यापारयुक्तंभवतितद्वदि त्यर्थः ॥ पार्श्वतइतिनियतिप्रकृत्योरितिशेषः ॥ ३३ ॥ ३४ ॥ प्रज्ञानेति ॥ प्रज्ञानंब्रह्मेतिश्रुतिवाक्यतइत्यर्थः ॥ ३५ ॥ स्वकारणंप्रकृतिः ॥ एकादशानांव क्ष्यमाणानां ॥ ३६ ॥ उच्चरेदिति ॥ परस्मै ॥ शिवज्योतिषइदमित्युच्चार्यनममेतिवदेत् अयंप्रकृतदेवतोद्देशेनत्यागईरितइत्यर्थः ॥ ३७ ॥ ॥

विविटीति ॥ विविधैस्वाहाकपोत्कायस्वाहेतिमंत्रयोरित्यर्थः ॥ व्यापकायेति ॥ व्यापकायपरमात्मनइदंनममेतिवदेदित्यर्थः ॥ एवमग्रेपि ॥ ३८ ॥ विश्वभूतेति ॥ विश्वभूतायेदमितितथाघसनोत्सुकायेदमितिवदेदित्यर्थः ॥ घसनमदनंसंसारतापहरणंतत्रोत्सुकायेत्यर्थः ॥ ३९ ॥ ४० ॥ उतिष्ठस्वेतिमंत्रस्येति ॥ त्यागईरितइतिसंबध्यते ॥ ओंस्वाहेतीति ॥ ओंस्वाहेत्यस्यमंत्रस्येत्यर्थः ॥ ४१ ॥ ४२ ॥ पुरोधसेगुरवे ॥ ४३ ॥ ४४ ॥ संमासिंचंतुमरुतःसमिं

अतःपरंविविटीतिकपोत्कायेतिमंत्रयोः ॥ व्यापकायपदस्यांतेपरमात्मनइत्यपि ॥ ३८ ॥ शिवज्योतिश्चतुर्थ्यंतंविश्वभूतपदंपुनः ॥ घसनोत्सुकशब्दंचचतुर्थ्यंतमथोवदेत् ॥ ३९ ॥ लोकत्रयपदस्यांतेव्यापिनेपरमात्मने ॥ परस्मैपदमुच्चार्यदेवायपदमुच्चरेत् ॥ ४० ॥ उत्तिष्ठस्वेतिमंत्रस्यविश्वरूपायशब्दतः ॥ पुरुषायपदंब्रूयादोंस्वाहेत्यस्यसंवदेत् ॥ ॥ ४१ ॥ लोकत्रयपदस्यांतेव्यापिनेपरमात्मने ॥ शिवायेदंनममचपदंब्रूयादतःपरम् ॥ ४२ ॥ स्वशाखोक्तप्रकारेणपुरस्तात्तंत्रकर्मच ॥ निर्वर्त्यसर्पिषामिश्रंचरुंप्रास्यपुरोधसे ॥ ४३ ॥ प्रदद्यादक्षिणांतस्मैहेमादिपरिबृंहिताम् ॥ ब्राह्मणमुद्वास्यततःप्रातरौपासनंहुनेत् ॥ ४४ ॥ संमासिंचंतुमरुतइतिमंत्रंजपन्मुनिः ॥ यातेअग्नइत्यनेनमंत्रेणाग्नौप्रताप्यच ॥ ४५ ॥ हस्तमग्नौसमारोप्यस्वात्मन्यद्वैतधामनि ॥ प्राभातिकींततःसंध्यामुपास्यादित्यमप्यथ ॥ ४६ ॥ उपस्थायप्रविश्याशुनाभिदघ्नंप्रवेशयेत् ॥ आहिताग्निस्तुयःकुर्यात्प्राजापत्येष्टिमाहुते ॥ ४७ ॥ श्रौतेवैश्वानरेसम्यक्सर्ववेदसदक्षिणाम् ॥ अथाग्निमात्मन्यारोप्यब्राह्मणःप्रव्रजेद्गृहात् ॥ ४८ ॥ सावित्रीप्रथमंपादंसावित्रीमित्युदीर्यच ॥ प्रवेशयामिशब्दांतंभूरोमितिचसंवदेत् ॥ ४९ ॥ द्वितीयंपादमुच्चार्यसावित्रीमितिपूर्वकम् ॥ प्रवेशयामिशब्दांतेभुवरोमितिसंवदेत् ॥ ५० ॥ तृतीयंपादमुच्चार्यसावित्रीमितिपूर्ववत् ॥ प्रवेशयामिशब्दांतेसुवरोमितिसंवदेत् ॥ ५१ ॥ पादद्वयमथोच्चार्यसावित्रीमित्यतःपरं ॥ प्रवेशयामिशब्दांतेभूरोमितिवदेदथ ॥ ५२ ॥ तृतीयंपादमुच्चार्यसावित्रीमित्यतःपरम् ॥ प्रवेशयामीतिवदन्भुवरोमितिसंवदेत् ॥ ५३ ॥ ॥ ॥

द्रःसंबृहस्पतिरितितैत्तिरीयारण्यकमंत्रंजपन्नित्यर्थः ॥ ४५ ॥ ४६ ॥ आहुतेआहितइतिक्वचित्पाठः ॥ ४७ ॥ ४८ ॥ सावित्रींगायत्रीमंत्रं ॥ उदीर्येति ॥ अर्थात्गायत्र्याःप्रथमंपादमुच्चार्यसावित्रींप्रवेशयामीत्युदीर्यभूरोमितिसम्यग्वदेदित्यर्थः ॥ एवमग्रेपियोज्यं ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

॥ २२ ॥ त्रिपादमुच्चरेत्पूर्वंसावित्रीमित्यतःपरम् ॥ प्रवेशयामिशब्दांतेसुवरोमित्युदीरयेत् ॥ ५४ ॥ इयंभगवतीसाक्षाच्छंक
राधशरीरिणी ॥ पंचवक्त्रादशभुजात्रिपंचनयनोज्वला ॥ ५५ ॥ नवरत्नकिरीटोद्यच्चंद्रलेखावतंसिनी ॥ शुद्धस्फटि
कसंकाशादशायुधधराशुभा ॥ ५६ ॥ हारकेयूरकटकरशनानूपुरादिभिः ॥ भूषितावयवादेवऋषिगंधर्वदानवैः ॥
॥ ५७ ॥ मानवैश्चसदासेव्यासर्वात्मव्यापिकाशिवा ॥ सदाशिवस्यदेवस्यधर्मपत्नीमनोहरा ॥ ५८ ॥ योह्यन्यथा
नयेत्पापीगायत्रींशिवरूपिणीम् ॥ सपच्यतेमहाघोरेनरकेकल्पसंख्यया ॥ ५९ ॥ साव्याहृतिभ्यःसंजातातास्वेव
विलयंगता ॥ ताश्चप्रणवसंभूताःप्रणवेविलयंगताः ॥ ६० ॥ प्रणवःसर्ववेदादिःप्रणवःशिववाचकः ॥ शिवोवाप्रण
वोह्येषप्रणवोवाशिवःस्मृतः ॥ ६१ ॥ वाच्यवाचकयोर्भेदोनात्यंतंविद्यतेयतः ॥ तस्मादेकाक्षरंदेवंशिवंपरमकारणम्
॥ ६२ ॥ उपासतेयतिश्रेष्ठाहृदयांभोजमध्यगम् ॥ एवंविलाप्यगायत्रींप्रणवेशिववाचके ॥ ६३ ॥ अहंवृक्षस्यरेरि
वेत्यनुवाकंजपेत्पुनः ॥ यश्छंदसामृषभइत्युनुवाकमुपक्रमात् ॥ ६४ ॥ गोपायांतंजपन्पश्चादेषणानांत्रयंत्यजेत् ॥ पु
त्रैषणायाश्चततोव्युत्थितोहमितिक्रमात् ॥ ६५ ॥ वित्तैषणायाश्चतथाव्युत्थितोऽहमितिब्रुवन् ॥ लोकैषणायाश्चत
थाव्युत्थितोऽहमितीरयेत् ॥ ६६ ॥ वदेज्जपेत्त्रिधामंदमध्योच्छ्रायक्रमान्मुने ॥ प्रणवंपूर्वमुद्धृत्यसृष्टिस्थितिलयक्रमा
त् ॥ ६७ ॥ तेषामथक्रमात्ब्रूयाद्भूःसंन्यस्तंभुवस्तथा ॥ संन्यस्तंसुवरित्युक्त्वासंन्यस्तंपदमुच्चरन् ॥ ६८ ॥ सर्वमंत्रा
धःप्रदेशेमयेतिचपदंवदेत् ॥ प्रणवंपूर्वमुद्धृत्यसमष्टिव्याहृतीर्वदेत् ॥ ६९ ॥ सन्यस्तमित्यतोब्रूयान्मयेतिचसमब्रवी
त् ॥ सदाशिवंहृदिध्यात्वामंदादीतिततोमुने ॥ ७० ॥ प्रैषमंत्रांश्चजप्त्वैवंसावधानेनचेतसा ॥ अभयंसर्वभूतेभ्योम
त्तःस्वाहेतिसंजपन् ॥ ७१ ॥ ॥ ॥ ॥ ॥

॥ २२ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ गोपायांतमिति ॥ श्रुतंमेगोपायेत्यंतमित्यर्थः ॥ तैत्तिरीयशिक्षोपनिषद्गतावेतावनुवाकौ ॥ ६५ ॥ ६६ ॥ ६७ ॥ तेषांमंत्राणांमध्ये ॥ ६८ ॥ सर्वेमंत्राधःप्रदेशेसर्वेषांमंत्राणांप्रत्येकमंते ॥ समष्टिव्याहृतयोभूर्भुवःसुवरितिमिलिताः ॥ ६९ ॥ मंदादीति ॥ पूर्वोक्तमंदमध्योच्छ्रायक्रमात् ॥ ७० ॥ ७१ ॥

॥ ७२ ॥ वन्हिजायामिति॥वह्निजायांस्वाहांओंभूःसमुद्रंगच्छस्वाहेतिमंत्रंपठेदित्यर्थः ॥ ७३ ॥ जुहुयादिति ॥ शिखांयज्ञोपवीतंचेतिसंबध्यते ॥ प्रेषैःभू
संन्यस्तंमयेत्यादिभिःपूर्वोक्तैः ॥ क्वचित्प्रास्येतिपाठः ॥ ७४ ॥ ७५ ॥ ७६ ॥ श्रुत्वेति ॥ आचार्यवाक्यमितिशेषः ॥ ७७ ॥ इंद्रस्येति ॥ इंद्रस्यवज्रो

प्राच्यांदिश्यपउद्धृत्यप्रक्षिपेदंजलिंततः ॥ शिखांयज्ञोपवीतंचगायत्र्योत्पाव्यपाणिना ॥ ७२ ॥ गृहीत्वाप्रणवंभूश्च
समुद्रंगच्छसंवदेत् ॥ वन्हिजायांसमुच्चार्यसोदकांजलिनाततः ॥ ७३ ॥ अप्सुजुहुयादथप्रेषैरभिमंत्र्यत्रिधात्वपः ॥
प्राश्याचम्यसमागम्यभूमौवस्त्रादिकंत्यजेत् ॥ ७४ ॥ उदङ्मुखःप्राङ्मुखोवागच्छेत्सप्तपदाधिकम् ॥ किंचिद्दू
रमथाचार्यस्तिष्ठतिष्ठेतिसंवदेत् ॥ ७५ ॥ लोकस्यव्यवहारार्थंकौपीनंदंडमेवच ॥ भगवन्स्वीकुरुष्वेतिदद्यात्स्वेनै
वपाणिना ॥ ७६ ॥ श्रुत्वासदोरंकौपीनंकाषायवसनंततः ॥ आच्छाद्याचम्यचद्वेधातंशिष्यमितिसंवदेत् ॥ ७७ ॥
इंद्रस्यवज्रोसिततइतिमंत्रमुदाहरन् ॥ संप्रार्थ्यदंडंगृण्हीयात्सखामाइतिसंजपन् ॥ ७८ ॥ अथगत्वागुरोःपार्श्वेशि
वपादांबुजंस्मरन् ॥ प्रणम्यदंडवद्भूमौत्रिवारंपुनरुत्थितः ॥ ७९ ॥ कृतांजलिपुटस्तिष्ठेद्गुरुपादसमीपतः ॥ कर्मारं
भात्पूर्वमेवगृहीत्वागोमयंशुभम् ॥ ८० ॥ स्थूलामलकमात्रेणकृत्वापिंडान्विशोष्यच ॥ सौरैस्तुकिरणैरेवहोमारंभा
ग्निमध्यगान् ॥ ८१ ॥ निलिप्यहोमसंपूर्तौभस्मसंगृह्यगोपयेत् ॥ ततोगुरुःसमादायविरजानलजंसितं ॥ ८२ ॥
भस्मतेनैवतंशिष्यमग्निरित्यादिभिःक्रमात् ॥ मंत्रैरंगानिसंस्पृश्यमूर्धादिचरणांततः ॥ ८३ ॥ ईशानाद्यैःपंचमंत्रैः
शिरआरभ्यसर्वतः ॥ समुद्धूल्यविधानेनत्रिपुंड्रंधारयेत्ततः ॥ ८४ ॥ त्रियायुषैस्त्र्यंबकैश्चमूर्ध्न्यारभ्ययथाक्रमम् ॥ त्द्ध
त्पंकजेसमासीनंध्यात्वाशिवमुमासखम् ॥ ८५ ॥ हस्तंनिधायशिरसिशिष्यस्यप्रीतमानसः ॥ ऋष्यादिसहितंतस्यद
क्षकर्णेसमुच्चरेत् ॥ ८६ ॥ प्रणवंत्रिप्रकारंतुततस्तस्यार्थमादिशेत् ॥ षड्विधार्थपरिज्ञानसहितंगुरुसत्तमः ॥ ८७ ॥
द्विषट्प्रकारंसगुरुंप्रणम्यभुविदंडवत् ॥ तदधीनोभवेन्नित्यंवेदांतार्थानुसारतः ॥ ८८ ॥ शिवज्ञानपरोभूयाच्छ्रवणा
द्यंगपूर्वकम् ॥ प्राभातिकाद्यनुष्ठानंजपांतंकारयेद्गुरुः ॥ ८९ ॥ पूजांचमंडलेतस्मिन्कैलासप्रस्तराव्हये ॥ शिवोदि
तेनमार्गेणशिष्यस्तत्रैवपूजयेत् ॥ ९० ॥ ॥ ॥ ॥ ॥

सिसखेमांगोपायेतिमंत्रमित्यर्थः ॥ सखेति ॥ सखामागोपायेतिमंत्रंसंजपन्नित्यर्थः ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥
त्रिःप्रकारंपूर्वोक्तस्थूलसूक्ष्मादिभेदेन ॥ तस्यप्रणवस्य ॥ षड्विधार्थावक्ष्यंतेग्रिमेध्याये ॥ ८७ ॥ द्विषड्कारंद्वादशवारं ॥ सःशिष्यः ॥ ८८ ॥ ८९ ॥ ९० ॥

॥ ११ ॥ १२॥ तास्मिन्‌लिंगे ॥ १३ ॥ इतिश्रीशैवमहापुराणेकैलाससंहिताटीकायांसारवोधिन्यामुत्तरभागेनवमोऽध्यायः ॥ ९ ॥ ओंनमःशिवाय ॥ ष
ड्विधार्थपरिज्ञानंप्रणवार्थःश्वविस्तृतः ॥ कलातत्वादिसंभूतिर्दशमेत्रनिरूप्यते ॥ १ ॥ विश्वामरेति ॥ विश्वेसर्वेयेऽमराःदेवास्तेषामीश्वरस्यशिवस्यसुत ॥१॥

देवंनित्यमशक्तश्चेत्पूजितंगुरुणाशुभम् ॥ स्फाटिकंपीठिकोपेतंगृण्हीयाल्लिंगमैश्वरम् ॥९१॥ वरंप्राणपरित्यागश्छे
दनंशिरसोपिमे ॥ नत्वनभ्यर्च्यभुंजीयांभगवंतंत्रिलोचनं ॥ ९२ ॥ एवंत्रिवारमुच्चार्यशपथंगुरुसन्निधौ ॥ तस्मिन्नेव
महादेवंनित्यमुद्युक्तमानसः ॥ पूजयेत्परयाभक्त्यापंचावरणमार्गतः ॥ ९३ ॥ इतिश्रीशिवमहापुराणेकैलाससंहि
तायामुत्तरभागेनवमोऽध्यायः ॥ ९ ॥ वामदेवउवाच ॥ भगवन्षण्मुखाशेषविज्ञानामृतवारिधे ॥ विश्वामरेश्वरसु
तप्रणतार्तिप्रभंजन ॥ १ ॥ षड्विधार्थपरिज्ञानमिष्टदंकिमुदाहृतं ॥ केतत्रषड्विधाह्यर्थाःपरिज्ञानंचकिंप्रभो ॥ २ ॥
प्रतिपाद्यश्चकस्तस्यपरिज्ञानेचकिंफलं ॥ एतमर्थमविज्ञायपशुशास्त्रविमोहितः ॥ ३ ॥ अहंशिवपदाद्वैतज्ञानामृत
रसायनं ॥ पीत्वाविगतसंमोहोभविष्यामियथातथा ॥ ४ ॥ कृपामृतार्द्रयादृष्ट्याविलोक्यसुचिरंमयि ॥ कर्तव्योनुग्र
हःश्रीमत्पादाब्जशरणागते ॥५॥ इतिश्रुत्वामुनींद्रोक्तंज्ञानशक्तिधरोविभुः ॥ प्राहान्यदर्शनमहासंत्रासजनकंवचः॥
॥ ६ ॥ श्रीसुब्रह्मण्यउवाच ॥ श्रूयतांमुनिशार्दूलत्वयायत्पृष्टमादरात् ॥ समष्टिव्यष्टिभावेनपरिज्ञानंमहेशितुः ॥
॥ ७ ॥ प्रणवार्थपरिज्ञानरूपंतद्विस्तरादहं ॥ वदामिषड्विधार्थैक्यपरिज्ञानेनसुव्रत ॥ ८ ॥ प्रथमोमंत्ररूपःस्याद्द्विती
योयंत्रभावितः ॥ देवतार्थस्तृतीयोर्थःप्रपंचार्थस्ततःपरं ॥ ९ ॥ चतुर्थःपंचमोर्थःस्याद्गुरुरूपप्रदर्शकः ॥ षष्ठःशिष्या
त्मरूपोर्थःषडर्थाःपरिकीर्तिताः ॥ १० ॥ तत्रमंत्रस्वरूपंतंवदामिमुनिसत्तम ॥ आद्यःस्वरःपंचमश्चपवर्गांतस्ततःपरः
॥ ११ ॥ विंदुनादौचपंचार्णाःप्रोक्तावेदैर्नचान्यथा ॥ एतत्समष्टिरूपोहिवेदादिःसमुदाहृतः ॥ १२ ॥ ॥

॥ २ ॥ प्रतिपाद्यःबोध्यः ॥ ३ ॥ तथेति ॥ यथाविगतसंमोहोभविष्यामितथामय्यनुग्रहःकर्तव्यइत्यग्रिमेणान्वयः ॥ ४ ॥ ५ ॥ अन्यदर्शनेति ॥ शैवदर्श
नादन्यद्दर्शनंशास्त्रंयेषांतेषांमहादुःखकरमित्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ प्रपंचार्थःप्रपंचरूपोर्थश्चतुर्थइत्यन्वयः ॥ ९ ॥ १० ॥ मंत्रस्वरूपंमंत्रात्मकं ॥ तंप्रथ
माथं ॥ आद्यःस्वरोऽकारःपंचमउकारःपवर्गांतोमकारः ॥ ११ ॥ वेदैरोमितिब्रह्मेत्यादिभिर्वेदवाक्यैः ॥ वेदादिःप्रणवः ॥ १२ ॥ ॥ ॥ २३ ॥

व्यष्टिसमष्टिरूपयोर्भिन्नप्रकारेणप्रणववर्णेषुस्थितिमाह ॥ नादइति ॥ बिंद्वाद्यंआद्यशब्देनाकारोकारमकारात्मकंवर्णत्रयं ॥ १३ ॥ प्रथमंस्वरमकारं॥ १४॥
पवर्गांतंमकारं ॥ नादमर्धचंद्राकारं ॥ १५ ॥ वेष्टयेदिति ॥ चेष्टयेदितिपाठांतरं ॥ नादावसानकंनादसमाप्तिपर्यंतं ॥ १६ ॥ सदाशिवोमिति ॥ शिवोमे
अस्तुसदाशिवोमित्येतत्पर्यंताश्रुतिर्ब्रह्मपंचकस्यवाचकंप्रणवंप्राहेत्यर्थः ॥ १७ ॥ १८ ॥ नन्वेकमेवाद्वितीयंब्रह्मेतिश्रुतत्वात्कथंब्रह्मपंचकमतआह ॥ शि

नादःसर्वसमष्टिःस्याद्बिंद्वाद्यंयच्चतुष्टयं ॥ व्यष्टिरूपेणसंसिद्धंप्रणवेशिववाचके ॥ १३ ॥ यंत्ररूपंशृणुप्राज्ञशिवलिं
गंतदेवहि ॥ सर्वाधस्ताल्लिखेत्पीठंतदूर्ध्वंप्रथमंस्वरं ॥ १४ ॥ उवर्णंचतदूर्ध्वस्थंपवर्गांतंतदूर्ध्वगं ॥ तन्मस्तकस्थंबिं
दुंचतदूर्ध्वंनादमालिखेत् ॥ १५ ॥ एवंयंत्रंसमालिख्यप्रणवेनैववेष्टयेत् ॥ तदुत्थेनैवनादेनभिंद्यान्नादावसानकं ॥
॥ १६ ॥ देवतार्थंप्रवक्ष्यामिगूढंशंकरभाषितं ॥ सद्योजातंप्रपद्यामीत्युपक्रम्यसदाशिवों ॥ १७ ॥ इतिप्राहश्रुतिः
साक्षाद्ब्रह्मपंचकवाचकं ॥ प्रणवंब्रह्मरूपिण्यःसूक्ष्माःपंचैवदेवताः ॥ १८ ॥ एताएवशिवस्यापिमूर्तिलेनोपबृंहिताः॥
शिवस्यवाचकोमंत्रःशिवमूर्तेश्चवाचकः ॥ १९ ॥ मूर्तिमूर्तिमतोर्भेदोनात्यंतंविद्यतेयतः ॥ ईशानमुकुटोपेतइत्यारभ्य
पुरोदितः ॥ २० ॥ शिवस्यविग्रहःपंचवक्त्राणिशृणुसांप्रतं ॥ पंचमादिसमारभ्यसद्योजाताद्यनुक्रमात् ॥ २१ ॥ ऊ
र्ध्वांतमीशानांतंचमुखपंचकमीशितुः ॥ ईशानस्यैवदेवस्यचतुर्व्यूहपदेस्थितं ॥ २२ ॥ पुरुषाद्यंचसद्यांतंब्रह्मरूपचतु
ष्टयं ॥ पंचब्रह्मसमष्टिःस्यादीशानंब्रह्मविश्रुतं ॥ २३ ॥ पुरुषाद्यंतुतद्व्यष्टिःसद्योजातांतकंमुने ॥ अनुग्रहमयंचक्रमिदं
पंचार्थकारणं ॥ २४ ॥ अनुग्रहोपिद्विविधस्तिरोभावादिगोचरः ॥ एकश्चान्यस्तुजीवानांपरापरविमुक्तिदः ॥२५॥
एतत्सदाशिवस्यैवकृत्यद्वयमुदाहृतं ॥ अनुग्रहेपिसृष्ट्यादिकृत्यानांपंचकंविभोः ॥ २६ ॥ अस्तितत्रापिसद्याद्यादेव
ताःपरिकीर्तिताः ॥ अनुग्रहमयंचक्रंशांत्यतीतकलामयं ॥ २७ ॥ ॥ ॥ ॥

वस्येति ॥ १९ ॥ २० ॥ पंचमादीति ॥ प्रथमादीतिक्वचित्पाठः ॥ २१ ॥ २२ ॥ पुरुषाद्यमिति ॥ पुरुषाद्यंसद्यांतंब्रह्मरूपचतुष्टयमीशानस्यैवदेवस्यच
तुर्व्यूहपदेस्थितमित्यन्वयः ॥ पंचब्रह्मेति ॥ ईशानाख्यंविश्रुतंब्रह्मपंचब्रह्मसमष्टिःस्यादित्यन्वयः ॥ २३ ॥ पंचार्थकारणंपंचानांसृष्ट्यादीनामर्थानांकारणं
॥ २४ ॥ तिरोभावेति ॥ तिरोभावोतर्धानंआदिनापुनःप्रकटीभावः ॥ २५ ॥ २६ ॥ तत्रापिसृष्ट्यादिकृत्यपंचकेपि ॥ २७ ॥ ॥

॥ २८ ॥ तेनसदाशिवेन ॥ २९ ॥ ३० ॥ तेब्रह्मलोकइति ॥ तेब्रह्मलोकेतुपरांतकालेपरामृतात्परिमुच्यंतिसर्वइतिश्रुतिःपूर्वोक्तमाहेत्यर्थः ॥ ३१ ॥ शिखाउपनिषत् ॥ अस्यैवसदाशिवस्यैव ॥ ३२ ॥ चमकस्येति ॥ सर्वैश्वर्यप्रदत्वबोधकचमकाध्यायप्रतिपाद्यस्यसदाशिवस्यैवपदंस्थानंश्रेष्ठंनततोन्यद



सदाशिवाधिष्ठितंचपरमंपदमुच्यते ॥ एतदेवपदंप्राप्यंयतीनांभावितात्मनां ॥ २८ ॥ सदाशिवोपासकानांप्रणवासक्तचेतसां ॥ एतदेवपदंप्राप्यतेनसाकंमुनीश्वराः ॥ २९ ॥ भुक्त्वासुविपुलान्भोगान्देवेनब्रह्मरूपिणा ॥ महाप्रलयसंभूतौशिवसाम्यंभजंतिहि ॥ ३० ॥ तेब्रह्मलोकइतिचश्रुतिराहसनातनी ॥ ऐश्वर्यंसदाशिवस्यापिसमष्टिरिदमेवहि ॥ ३१ ॥ सर्वैश्वर्येणसंपन्नइत्याहाथर्वणीशिखा ॥ सर्वैश्वर्यप्रदातृत्वमस्यैवप्रवदंतिहि ॥ ३२ ॥ चमकस्यपदंनान्यदधिकंविद्यतेपदं ॥ ब्रह्मपंचकविस्तारःप्रपंचःखलुदृश्यते ॥ ३३ ॥ ब्रह्मभ्यएवसंजातानिवृत्त्याद्याःकलामताः ॥ सूक्ष्मभूतस्वरूपिण्यःकारणत्वेनविश्रुताः ॥ ३४ ॥ स्थूलरूपस्वरूपस्यप्रपंचस्यास्यसुव्रत ॥ पंचधावस्थितंयत्तद्ब्रह्मपंचकमिष्यते ॥ ३५ ॥ पुरुषःश्रोत्रवाण्यौचशब्दाकाशौचपंचकं ॥ व्याप्तमीशानरूपेणब्रह्मणामुनिसत्तम ॥३६॥ प्रकृतिस्त्वक्पाणिश्चस्पर्शोवायुश्चपंचकं ॥ व्याप्तंपुरुषरूपेणब्रह्मणैवमुनीश्वर ॥ ३७ ॥ अहंकारस्तथाचक्षुःपादौरूपंचपावकः ॥ अघोरब्रह्मणाव्याप्तमेतत्पंचकमंचितं ॥ ३८ ॥ बुद्धिश्चरसनापायूरसआपश्चपंचकं ॥ ब्रह्मणावामदेवेनव्याप्तंभवतिनित्यशः ॥ ३९ ॥ मनोनासातथोपस्थगंधौभूमिश्चपंचकं ॥ सद्येनब्रह्मणाव्याप्तंपंचब्रह्ममयंजगत् ॥ ॥ ४० ॥ यंत्ररूपेणोपदिष्टःप्रणवःशिववाचकः ॥ समष्टिःपंचवर्णानांबिंद्वाद्यंयच्चतुष्टयं ॥ ४१ ॥ शिवोपदिष्टमार्गेण यंत्ररूपंविभावय ॥ सदाशिवःसमष्टिःस्यादाकाशाधिपतिःप्रभुः ॥ ४२ ॥ ॥ ॥

धिकंकिमपीत्यर्थः ॥ ब्रह्मेति ॥ ब्रह्मपंचकस्यैवविस्तारोयस्मिन्सः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ब्रह्मपंचकस्यस्थूलदेहादिरूपेप्रपंचेपंचधावस्थानप्रकारमाह ॥ पुरुषइत्यादिभिः ॥ ३६ ॥ ३७ ॥ अंचितंपूजितं ॥ ३८ ॥ रसनारसग्राहकमिंद्रियं ॥ पायुर्गुदं ॥ ३९ ॥ ४० ॥ समष्टिःसमष्टिरूपोनाद॥ चतुष्टयमिति ॥ नादरहितंपूर्वोक्तमकारादिविं दुंतंयव्द्यष्टिरूपंचतुष्टयंसप्रणवःशिववाचकइत्यन्वयः ॥ ४१ ॥ ४२ ॥ ॥ ॥

महेशादिचतुष्टयं ॥ महेश्वररुद्रमूर्तिविष्णुब्रह्मात्मकमुत्पत्तिक्रमेणवक्ष्यमाणं ॥ तदेवाह ॥ सदाशिवेति ॥ ४३ ॥ सःमहेशःसकलःकलासहितः ॥ ४४ ॥ ईश्वरादिचतुष्टयमाह ॥ ईशइति ॥ ४५ ॥ तिरोधाचक्रंतिरोभावचक्रं ॥ ४६ ॥ देहभावेनशरीरस्वरूपेणपशुवर्गस्यजीवसमूहस्य ॥ कर्मसाम्येति ॥ कर्मणोःपुण्यपापयोर्यस्मिन्क्षणेसाम्यंभवेत्तत्क्षणावधीत्यर्थः॥ ४७ ॥ एकःस्यादिति ॥ योविभोरनुग्रहमयोऽर्थोऽस्तिसतिरोभावरूपएवकर्मसाम्यएकएवस्यादित्यर्थः ॥ कर्मसाम्येसएवस्यादितिपाठांतरं ॥ सर्वेश्वराद्याःअधुनोक्ताव्युत्क्रमेणेशांताश्चत्वारोयेतेदेवताइत्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥ सःरुद्रः ॥ ५१ ॥ ५२ ॥ नित्या

अस्यैवव्यष्टितापन्नंमहेशादिचतुष्टयं ॥ सदाशिवसहस्रांशान्महेशस्यसमुद्भवः ॥ ४३ ॥ पुरुषानन्यरूपत्वाद्वायोरधिपतिश्चसः ॥ मायाशक्तियुतोवामेसकलश्चक्रियाधिकः ॥ ४४ ॥ अस्यैवव्यष्टिरूपंस्यादीश्वरादिचतुष्टयं ॥ ईशोविश्वेश्वरःपश्चात्परमेशस्ततःपरं ॥ ४५ ॥ सर्वेश्वरइतीदंतुतिरोधाचक्रमुत्तमं ॥ तिरोभावोद्विधाभिन्नएकोरुद्रादिगोचरः ॥ ४६ ॥ अन्यश्चदेहभावेनपशुवर्गस्यसंततं ॥ भोगानुरंजनपरःकर्मसाम्यक्षणावधि ॥ ४७ ॥ कर्मसाम्येचएकःस्यादनुग्रहमयोविभोः ॥ अस्तिसर्वेश्वराद्यास्तेदेवताःपरिकीर्तिताः ॥ ४८ ॥ तिरोभावात्मकंचचक्रंभवेच्छांतिकलामयं ॥ महेश्वराधिष्ठितंचपदमेतदनुत्तमं ॥ ४९ ॥ एतदेवपदंप्राप्यंमहेशपदसेविनां ॥ माहेश्वराणांसालोक्यक्रमादेतच्चमुक्तिदं ॥ ५० ॥ महेश्वरसहस्रांशाद्रुद्रमूर्तिरजायत ॥ अघोरवदनाकारस्तेजस्तत्वाधिपश्चसः ॥ ५१ ॥ गौरीशक्तियुतोवामेसर्वसंहारकृत्प्रभुः ॥ अस्यैवव्यष्टिरूपंस्याच्छिवाद्यथचतुष्टयं ॥ ५२ ॥ शिवोहरोमृडभवौविदितंचक्रमद्भुतं ॥ संहाराख्यंतुसंहारस्त्रिधानित्यादिभेदतः ॥ ५३ ॥ नित्योजीवसुषुप्त्याख्योविधेर्नैमित्तिकःस्मृतः ॥ विलयस्तस्यसुमहानितिवेदनिदर्शितः ॥ ५४ ॥ जीवानांजन्मदुःखादिश्रांतानांमुषितात्मनां ॥ विश्रांत्यर्थंमुनिश्रेष्ठाःकर्मणांपाकहेतवे ॥ ५५ ॥ संहारःकल्पितस्त्रेधारुद्रेणामिततेजसा ॥ रुद्रस्यैवतुकृत्यानांत्रयमेतदुदाहृतं ॥ ५६ ॥

दिभेदतः ॥ नित्यनैमित्तिकमहाप्रलयभेदेन ॥ ५३ ॥ विधेःपितामहस्यसुषुप्त्याख्यइतिनिष्कृष्यसंबध्यते ॥ विलयइति ॥ तस्यविधेःपरब्रह्मणिलयःसुमहान्त्संहारइत्यर्थः ॥ ५४ ॥ संहारत्रैविध्यकल्पनायाःफलमाह ॥ जीवानामिति ॥ जन्मदुःखादिभिःश्रांतानामतएवमुषितात्मनामविदितस्वस्वरूपाणांजीवानामित्यर्थः ॥ ५५ ॥ कृत्यानांसंहाररूपाणां ॥ ५६ ॥ ॥ ॥ ॥ ॥ ॥

संहृतावपिसंहारकालेपिविभोःसृष्ट्यादिकृत्यानांसृष्टिस्थितिलयतिरोभावानुग्रहरूपाणांपंचकमस्ति ॥ सूक्ष्मरूपेणेतिभावः ॥ भवाद्याःभवमृडहरशिवाख्या प्युक्रमेणाधुनोक्ताः ॥ ५७ ॥ ५८ ॥ रौद्राणांरुद्रभक्तानां ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ स्थितिपदार्थमाह ॥ सृष्टस्येति ॥ तत्कर्तॄणांब्रह्मादीनां ॥ फलभोगिनामिति ॥ पालनमितिसंबध्यते ॥ ६३ ॥ ६४ ॥ प्रद्युम्नमुख्यावासुदेवाद्याअधुनोक्ताः ॥ प्रतिष्ठारूपंप्रतिष्ठाख्यकलामयं ॥ ६५ ॥ ६६ ॥

संहृतावपिसृष्ट्यादिकृत्यानांपंचकंविभोः ॥ अस्तितत्रभवाद्यास्तेदेवताःपरिकीर्तिताः ॥ ५७ ॥ संहाराख्यमिदंचक्रं विद्यारूपकलामयं ॥ अधिष्ठितंचरुद्रेणपदमेतन्निरामयं ॥ ५८ ॥ एतदेवपदंप्राप्यंरुद्राराधनकांक्षिणां ॥ रौद्राणां तद्धिसालोक्यक्रमात्सायुज्यदंमुने ॥ ५९ ॥ रुद्रमूर्तेःसहस्रांशाद्विष्णोरेवाभवज्जनिः ॥ सवामदेवचक्रात्मावारितलै कनायकः ॥ ६० ॥ रमाशक्तियुतोवामेसर्वरक्षाकरोमहान् ॥ अस्यैववासुदेवादिचतुष्कंव्यष्टितांगतं ॥ ६१ ॥ वासु देवोनिरुद्धश्चततःसंकर्षणःपरः ॥ प्रद्युम्नश्चेतिविख्यातंस्थितिचक्रमिदंपरं ॥ ६२ ॥ स्थितिःसृष्टस्यजगतस्तत्कर्तॄणां चपालनं ॥ आरब्धकर्मभोगांतंजीवानांफलभोगिनां ॥ ६३ ॥ विष्णोरेवेदमाख्यातंकृत्यंरक्षाविधायिनः ॥ स्थिताव पितुसृष्ट्यादिकृत्यानांपंचकंविभोः ॥ ६४ ॥ अपिप्रद्युम्नमुख्यास्तेदेवतास्तत्रकीर्तिताः ॥ स्थितिचक्रमिदंब्रह्मन्प्रति ष्ठारूपमुत्तमम् ॥ ६५ ॥ जनार्दनाधिष्ठितंचपरमंपदमुच्यते ॥ एतदेवपदंप्राप्यंविष्णुपादप्रसेविनां ॥ ६६ ॥ वैष्ण वानामिदंचक्रंसालोक्यादिपदप्रदं ॥ विष्णोरेवसहस्रांशात्संबभूवपितामहः ॥ ६७ ॥ सद्योजातमुखात्मायःपृथिवी तलनायकः ॥ वाग्देवीसहितोवामेसृष्टिकर्ताजगत्प्रभुः ॥ ६८ ॥ हिरण्यगर्भाद्यस्यैवव्यष्टिरूपंचतुष्टयम् ॥ हिरण्यग र्भोथविराट्पुरुषःकालएवच ॥ ६९ ॥ सृष्टिचक्रमिदंब्रह्मपुत्रादिऋषिसेवितं ॥ सृष्टिस्तुसंहृतस्यास्यजीवस्यप्रकृतौब हिः ॥ ७० ॥ आनीयकर्मभोगार्थंसाधनांगफलैःसह ॥ संयोजनमितीदंतुकृत्यंपैतामहंविदुः ॥ ७१ ॥

॥ ६७ ॥ ६८ ॥ ६९ ॥ ब्रह्मपुत्रेति ॥ ब्रह्मपुत्राःस्वायंभुवभृग्वादयोवायुसंहितायामुक्तास्तत्प्रभृतिभिर्मुनिभिःसेवितमित्यर्थः ॥ सृष्टेर्लक्षणमाह ॥ संहृतस्येति ॥ प्रकृतौसंहृतस्यलीनस्यास्यजीवस्यकर्मभोगार्थंपुनर्वहिरानीयभोगसाधनैःपुत्रकलत्रादिभिस्तदंगैर्हिरण्यादिभिस्तत्फलैःसुखदुःखादिभिःसहसंयोजनंसृष्टि रित्यन्वयः ॥ ७० ॥ ७१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कालादयोव्युत्क्रमेणाधुनोक्ताश्चत्वारः ॥ ७२ ॥ निवृत्तिरूपंनिवृत्त्याख्यकलामयं ॥ ७३ ॥ ७४ ॥ चतुष्कइति ॥ महेशादिक्रमादुक्तानांचक्राणांचतुष्के प्यस्मिन्गौण्यावृत्त्याप्रणवोवाचकोवोधकोभवेदित्यन्वयः ॥ ७५ ॥ स्तौतीति ॥ पंचारंचक्रंपरिवर्ततेपृथुइत्यादिवाक्यैरितिभावः ॥ ७६ ॥ ७७ ॥ अलातचक्रमुल्मुकचक्रं अंगारोलातमुल्मुकमित्यमरः ॥ चक्रमितीति ॥ चक्रसाधर्म्याच्चक्रमीरितमित्यर्थः ॥ ७८ ॥ पृथुसस्यत्वाद्विस्तृतसस्यत्वात् ॥ उपदिश्य

जगत्सृष्टावपिमुनेकृत्यानांपंचकंविभोः ॥ अस्तिकालादयस्तत्रदेवताःपरिकीर्तिताः ॥ ७२ ॥ निवृत्तिरूपमाख्यातं सृष्टिचक्रमिदंबुधैः ॥ पितामहाधिष्ठितंचपदमेतद्विशोभितम् ॥ ७३ ॥ एतदेवपदंप्राप्यंब्रह्मार्पितधियांनृणां ॥ पैतामहानामेतद्धिसालोक्यादिविमुक्तिदं ॥ ७४ ॥ अस्मिन्नपिचतुष्केतुचक्राणांप्रणवोभवेत् ॥ महेशादिक्रमादेवगौण्यावृत्त्यासवाचकः ॥ ७५ ॥ इदंखलुजगच्चक्रंश्रुतिविश्रुतवैभवं ॥ पंचारंचक्रमितिहिस्तौतिश्रुतिरिदंमुने ॥ ७६ ॥ एकमेवजगच्चक्रंशंभोःशक्तिविजृंभितं ॥ सृष्ट्यादिपंचावयवंपंचारमितिकथ्यते ॥ ७७ ॥ अलातचक्रभ्रमिवदविच्छिन्नलयोदयं ॥ परितोवर्ततेयस्मात्तस्माच्चक्रमितीरितं ॥ ७८ ॥ सृष्ट्यादेःपृथुसस्यत्वात्पृथुत्वेनोपदिश्यते ॥ हिरण्मयस्वरूपस्यशंभोरमितवर्चसः ॥ ७९ ॥ शक्तिकार्यमिदंचक्रंहिरण्यज्योतिविश्रुतं ॥ सलिलेनावृतमिदंसलिलंवन्हिनावृतं ॥ ८० ॥ आवृतोवायुनावन्हिराकाशेनावृतोमरुत् ॥ भूतादिनाखमावातंभूतादिर्महतावृतः ॥ ८१ ॥ अव्यक्तेनावृतस्तद्वन्महानित्येवमास्तिकैः ॥ उक्तानिसप्तावरणान्यस्यचक्रस्यगुप्तये ॥ ८२ ॥ चक्राद्दशगुणाधिक्यंसलिलस्यविधीयते ॥ उपर्युपरिचान्योन्यमेवंदशगुणाधिकं ॥ ८३ ॥ इममर्थंहृदीकृत्यचक्रसामीप्यवर्तनात् ॥ सलिलस्यचतन्मध्येइतिप्राहश्रुतिःस्वयं ॥ ८४ ॥ अनुग्रहतिरोभावसंहृतिस्थितिसृष्टिभिः ॥ करोत्यविरतंलीलामेकःशक्तियुतःशिवः ॥ ८५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तइति ॥ चक्रमितिसंवध्यते ॥ ७९ ॥ सलिलेनेति ॥ सलिलेनजलेनावृतंहिरण्यज्योतिःसरिरस्यमध्यइतिश्रुतेः ॥ ८० ॥ भूतादिनाअहंकारेण ॥ आवातमावृतं ॥ ८१ ॥ अव्यक्तेनप्रकृत्या ॥ ८२ ॥ आवरकाणांसलिलादीनांपरिमाणान्याह ॥ चक्रादिति ॥ ८३ ॥ ननुसर्वव्यापिनःपरमेश्वरस्यकथंसरिरस्य मध्यइत्यादिश्रुतिरेकदेशेस्थितिंप्रतिपादयतीत्यतआह ॥ इममिति ॥ इमंहिरण्मयस्वरूपस्येत्याद्युक्तं ॥ ८४ ॥ ८५ ॥ ॥ ॥

निश्चितमिति ॥ पुरुषएवेदꣳसर्वंसर्वोह्येषरुद्रइत्यादिश्रुतिभ्यइतिभावः ॥ ८६ ॥ परमात्मनिविषये ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ अनिर्णयेहेतुमाह ॥ बहुधेति ॥ जगत्सृष्ट्यभिधायिनःतस्माद्वाएतस्मादात्मनआकाशःसंभूतइत्यादयः ॥ ९२ ॥ ऐक्यभावंअविरोधेनसृष्टेःप्रतिपादकतां ॥ ९३ ॥ सःज्ञानक्रि

बहुनेहकिमुक्तेनमुनेसारंवदामिते ॥ शिवएवेदमखिलंशक्तिमानितिनिश्चितं ॥ ८६ ॥ सूतउवाच ॥ श्रुत्वोपदिष्टंगुरुणावेदार्थंमुनिपुंगवः ॥ परमात्मनिसंदिग्धमर्थंपप्रच्छसादरं ॥ ८७ ॥ वामदेवउवाच ॥ ज्ञानशक्तिधरस्वामिन्परमानंदविग्रह ॥ प्रणवार्थामृतंपीतंश्रीमुखाब्जपरिसृतं ॥ ८८ ॥ दृढप्रज्ञश्चजातोस्मिसंदेहोविगतोमम ॥ सदाशिवादिकीटांतरूपस्यजगतःस्थितिः ॥ ८९ ॥ स्त्रीपुंरूपेणसर्वत्रदृश्यतेनहिसंशयः ॥ एवंरूपस्यजगतःकारणंयत्सनातनं ॥ ९० ॥ स्त्रीरूपंतत्किमाहोस्वित्पुंरूपंवानपुंसकं ॥ उतमिश्रंकिमन्यद्वानजातस्तत्रनिर्णयः ॥ ९१ ॥ बहुधाविवदंतीहविद्वांसःशास्त्रमोहिताः ॥ जगत्सृष्ट्यभिधायिन्यःश्रुतयोजगतासह ॥ ९२ ॥ यथैक्यभावंगच्छेयुरेतदन्यच्चवेदय ॥ जानामीतिकरोमीतिव्यवहारःप्रदृश्यते ॥ ९३ ॥ सहिसर्वात्मसंसिद्धोविवादोनात्रकस्यचित् ॥ सचदेहेंद्रियमनोबुद्ध्यहंकारसंभवः ॥ ९४ ॥ आहोस्विदात्मनोरूपंमहानत्रापिसंशयः ॥ द्वयमेतद्धिसर्वेषांविवादास्पदमद्भुतं ॥ ९५ ॥ उत्पाट्याज्ञानसंभूतंसंशयाख्यविषद्रुमं ॥ शिवाद्वैतमहाकल्पवृक्षभूमिर्यथाभवेत् ॥ ९६ ॥ चित्तंममतथादेवबोध्योस्मिकृपयातव ॥ सूतउवाच ॥ श्रुत्वैवंमुनिनापृष्टंवचोवेदांतनिर्वृतं ॥ ९७ ॥ रहस्यंप्रभुराहेदंकिंचित्प्रहसिताननः ॥ सुब्रह्मण्यउवाच ॥ एतदेवमुनेगुह्यंशिवेनपरिभाषितं ॥ ९८ ॥ अंबायाःशृण्वतस्तस्यास्तन्यंपीत्वामुहुर्मुहुः ॥ ममापिनिश्चितंतत्तेवदामिशृणुसांप्रतं ॥ ९९ ॥ कर्त्रस्तितात्वमारभ्यशास्त्रवादःसुविस्तरः ॥ त्वयोपदिष्टायेशिष्यास्तत्रकोवाभवत्समः ॥ १०० ॥ कापिलादिषुशास्त्रेषुभ्रमंत्यद्यापितेधमाः ॥ येशप्तामुनिभिःषड्भिःशिवनिंदापराःपुरा ॥ १०१ ॥ ॥ ॥ ॥ ॥ ॥

यात्मकोव्यवहारःसर्वात्मसंसिद्धःसर्वानुभवसिद्धः ॥ ९४ ॥ ९५ ॥ उत्पाट्यउच्छिद्य ॥ ९६ ॥ चित्तमिति ॥ ममचित्तंशिवाद्वैतमहाकल्पवृक्षस्यभूमिर्विषयितयाश्रयोयथाभवेत्तथाबोध्योस्मीत्यन्वयः ॥ वेदांतनिर्वृतंउपनिषदर्थगर्भितं ॥ ९७ ॥ ९८ ॥ स्तन्यंपीत्वेति ॥ अनेनस्वस्यस्वस्थचित्तत्वंस्कंदेनदर्शितं ॥ ९९ ॥ कर्त्रस्तितात्वंजगत्कर्तृसद्भावं ॥ आर्षःस्वार्थेत्वप्रत्ययः ॥ १०० ॥ कपिलादिप्रणीतेषुनिरीश्वरंसांख्यादिषु ॥ १०१ ॥ ॥

तेगौतमदधीचनंदिकेश्वरप्रभृतिभिःपङ्क्तिःशप्ताविप्राः अन्यथावादिनःश्रुतिविरुद्धसिद्धांतवादिनः ॥ अनुमानप्रयोगस्येति ॥ प्रतिज्ञाहेतूदाहरणोपनयनिगमनानिपंचावयवास्तद्युक्तस्यक्षित्यंकुरादिकंकर्तृजन्यंदृश्यत्वादित्यादेरनुमानप्रयोगस्याप्यत्रपरमेश्वरस्वरूपासिद्धिविषयेऽवकाशोऽवसरोविद्यतेइत्यर्थः॥ १०२॥ तदेवदर्शयति ॥ सत्विति ॥ सःपर्वतोवन्हिमानित्यादिरनुमानप्रयोगः ॥ अत्रापिईश्वरसिद्धिविषयेपि ॥ १०३ ॥ दर्शनालंवनत्वतइति ॥ दृश्यत्वाद्धेतोरित्यर्थः ॥ ज्ञातव्यःप्रपंचस्यकर्तेत्यनुमातव्यः ॥ १०४ ॥ विश्वःप्रपंचः ॥ षट्कोशरूपःपिंडोदेहाख्यः ॥ यथोक्तंगर्भोपनिषदि ॥ एतत्षाट्कौशिकंशरीरंत्रीणिपितृतस्त्रीणिमातृतोऽस्थिस्नायुमज्जानःपितृतस्त्वङ्मांसरुधिराणिमातृतइति ॥ तत्राद्यत्रयमस्थिस्नायुमज्जारूपंपित्रंशजंभवेदित्यन्वयः ॥ १०५ ॥ अन्य

नश्रोतव्याहितद्वार्तातेन्यथावादिनोयतः ॥ अनुमानप्रयोगस्याप्यवकाशोत्रविद्यते ॥ १०२ ॥ पंचावयवयुक्तस्यस
तुधूमस्यदर्शनात् ॥ पर्वतस्याग्निमद्भावंवदत्यत्रापिसुव्रत ॥ १०३ ॥ प्रत्यक्षस्यप्रपंचस्यदर्शनालंबनत्वतः ॥ ज्ञातव्यः
परमेशानःपरमात्मानसंशयः ॥ १०४ ॥ स्त्रीपुंरूपमयोविश्वःप्रत्यक्षेणैवदृश्यते ॥ षट्कोशरूपपिंडोहितत्रचाद्यत्र
यंभवेत् ॥ १०५ ॥ पित्रंशजंपुनश्चान्यन्मात्रंशजमितिश्रुतिः ॥ एवंसर्वशरीरेषुस्त्रीपुंभावविदोजनाः ॥ १०६ ॥ प
रमात्मन्यपितथास्त्रीपुंभावंविदुर्बुधाः ॥ सच्चिदानंदरूपत्वंवदतिब्रह्मणःश्रुतिः ॥ १०७ ॥ असन्निवर्तकःशब्दःसदा
त्मेतिनिगद्यते ॥ निवर्तनंजडत्वस्यचिच्छब्देनविधीयते ॥ १०८ ॥ त्रिलिंगवर्तिसच्छब्दःपुंरूपोत्रविधीयतां ॥ प्रकाश
वाचीसभवेत्सन्प्रकाशइतिस्फुटं ॥ १०९ ॥ ज्ञानशब्दस्यपर्यायश्चिच्छब्दःस्त्रीत्वमागतः ॥ प्रकाशश्चिच्चमिथुनंजग
त्कारणतांगतं ॥ ११० ॥ सच्चिदात्मन्यपितथाजगत्कारणतांगते ॥ एकत्रैवशिवःशक्तिरितिभावोविधीयते ॥ १११ ॥
तैलवर्त्यादिमालिन्यात्प्रकाशस्यापिविद्यते ॥ मालिन्यमशिवत्वंचचिताग्न्यादिषुदृश्यते ॥ ११२ ॥ ॥

त्वङ्मांसरुधिररूपं ॥ श्रुतिरधुनोक्ता ॥ १०६ ॥ ननुनिर्गुणेपरमात्मनिकथंस्त्रीपुंभावंविदुरतआह ॥ सच्चिदित्यादिभिः ॥ श्रुतिःसत्यंविज्ञानमानंदंब्रह्मेत्यादिका ॥ १०७ ॥ सदादिपदानांकृत्यान्याह ॥ असदिति ॥ असतोवाध्यस्यप्रपंचस्यव्यावर्तकःसच्छब्दःतस्यहिकालत्रयावाध्यमित्यर्थस्तदेवाह ॥ सदात्मेतीति ॥ सदेवसोम्येदमग्रआसीदितिश्रुतेरितिभावः ॥ १०८ ॥ अत्रब्रह्मणि ॥ प्रकाशवाचीति ॥ एवंचप्रकाशपदार्थस्यपुंस्त्वेनवोधात्तद्वाचिसच्छब्दगतंपुंस्त्वंब्रह्मण्यारोप्यपुंस्त्वव्यवहारइतिभावः ॥ एवमग्रेपि ॥ १०९ ॥ ११० ॥ १११ ॥ कस्यचित्प्रकाशस्यापिमालिन्यंदृश्यतेतद्वारणायशिवत्वंविशेषणीयमित्याह ॥ तैलवर्तीतिसार्धेन ॥ विद्यतइति ॥ मालिन्यमित्यत्रसंवध्यते ॥ ११२ ॥ ॥ ॥ ॥

॥ ११३ ॥ जीवाश्रिताचिच्छक्तिसत्त्वेमानमाह ॥ बलवानिति॥ ११४॥ ११५॥तमुद्दिश्येति॥तमानंदमुद्दिश्यतादृशानंदलाभार्थमित्यर्थः॥ ११६॥उपनिषत्स्विति ॥ सत्यंज्ञानमनंतंब्रह्म तद्ब्रह्मेतीत्यादिषूपनिषद्गतवाक्येषुब्रह्मेतिब्रह्मशब्देनबृंहिधात्वर्थगोचरःसर्वात्मत्वंतयोरेवाशिवशक्त्योरेवगीयतइत्यर्थः ॥ तच्चसर्वात्मत्वंनित्यशुद्धमुक्तत्वादिस्वरूपं ॥ तदुक्तंश्रीमच्छारीरमीमांसाभाष्येभगवत्पादैः ॥ अस्तितावद्ब्रह्मनित्यशुद्धमुक्तस्वभावंसर्वज्ञंसर्वशक्ति ॥ ब्रह्मशब्दस्यहिव्युत्पाद्यमानस्यनित्यशुद्धत्वादयोर्थाःप्रतीयंतेबृहतेर्धातोरर्थानुगमादिति ॥ ११७ ॥ तदेवसर्वात्मत्वमुदाहृत्यदर्शयति ॥ बृंहणत्वमिति ॥ बृंहणत्वंपूर्वोक्तनित्यशुद्धत्वादिकंबृहत्त्वंसर्वव्यापित्वंचपंचब्रह्ममयेसादाख्यविग्रहेसदाशिवविग्रहेऽस्तितत्रैवविश्वस्यप्रपंचस्यप्रतीतिर्ब्रह्मशब्दिताब्रह्मशब्देनव्यवहृतेत्यर्थः ॥ ११८ ॥ प्रतिलोमात्मकेसोहमित्याकारके ॥ हकारस्यावर्णसहितस्येतिभावः ॥ ११९ ॥ परमात्मनोः शिवशक्त्योः ॥ महामंत्रइति ॥ सूक्ष्मो

एतन्निवर्तनत्वेनशिवत्वंश्रुतिचोदितं ॥ जीवाश्रितायाश्चिच्छक्तेर्दौर्बल्यंविद्यतेसदा॥ ११३॥ तन्निवृत्त्यर्थमेवात्रशक्तित्वं सार्वकालिकं॥बलवान्शक्तिमांश्चेतिव्यवहारःप्रदृश्यते॥ ११४॥एवंशिवत्वंशक्तित्वंपरमात्मनिदर्शितं॥शिवशक्त्योस्तु संयोगादानंदःसततोदितः॥११५॥प्रकाशतेतमुद्दिश्यमुनयःक्षीणकल्मषाः॥ शिवेमनःसमाधायप्राप्ताःशिवमनामयं ॥ ११६ ॥ सर्वात्मत्वंतयोरेवब्रह्मेत्युपनिषत्सुच ॥ गीयतेब्रह्मशब्देनबृंहिधात्वर्थगोचरः ॥ ११७ ॥ बृंहणत्वंबृहत्त्वंच यथासादाख्यविग्रहे ॥ पंचब्रह्ममयेविश्वप्रतीतिर्ब्रह्मशब्दिता ॥ ११८ ॥ प्रतिलोमात्मकेहंसेवक्ष्यामिप्रणवोद्भवं ॥ व्यंजनस्यसकारस्यहकारस्यचवर्जनात् ॥ ११९ ॥ ओमित्येवभवेत्स्थूलोवाचकःपरमात्मनोः ॥ महामंत्रोभवेत्सूक्ष्मस्तदुद्धारंवदामिते ॥ १२० ॥ आद्येत्रिपंचरूपेचस्वरेषोडशकेत्रिषु ॥ महामंत्रोभवेदादौससकारोभवेद्यदा॥ १२१॥ हंसश्चप्रतिलोमःस्यात्सकारार्थःशिवःस्मृतः ॥ शक्त्यात्मकोमहामंत्रवाच्यःस्यादितिनिर्णयः ॥ १२२ ॥ गुरूपदेशकालेतुसोहंशक्त्यात्मकःशिवः ॥ इतिजीवपरोभूयान्महामंत्रस्तदापशुः ॥ १२३ ॥ ॥

योमहामंत्रोभवेत्तदुद्धारंवदामीत्यन्वयः ॥ १२० ॥ आद्यइति ॥ अअंअःएषुत्रिषुस्वरेष्वाद्येस्वरेअकारेत्रिपंचरूपेअंइतिपंचदशस्वररूपतांप्राप्तेचाद्धकारव्यंजनादिकेहंइतिस्थितेतथाषोडशकेअःएवंरूपेयदादौसकारोभवेत्तदाहंसइतिस्यात्सचापियदाप्रतिलोमःस्यात्तदाहंसःसोहमितिमहामंत्रोभवेदित्यर्थः ॥ एतदुद्धारस्यसूक्ष्मत्वादयंसूक्ष्मः ॥ सकारार्थइति ॥ सइतिसर्वनाम्नाविशुद्धस्वभावशिवस्यैवबुद्धिविषयत्वादितिभावः ॥ विशुद्धिःशिवतास्वतइत्युक्तत्वात् ॥ ॥ १२१ ॥ १२२ ॥ तत्रैवविशेषमाह ॥ गुरूपदेशकालइति ॥ सशक्त्यात्मकःशिवोहमस्मीतिजीवपरोमहामंत्रोयदाभूयात्तदाशक्त्यात्मकःशिवांशःपशुःशिवैक्याच्छिवसाम्यभाग्भवेदित्यन्वयः ॥ भूयादित्यनेनेदृशस्यैवमहामंत्रस्येष्टप्राप्तिजनकत्वमितिसूचितं ॥ जीवस्यशिवांशत्वंवक्ष्यते ॥ १२३ ॥

प्रज्ञानमिति ॥ प्रज्ञानंब्रह्मेतिश्रुतिवाक्येत्वित्यर्थः ॥ प्रज्ञानार्थःप्रज्ञानरूपोब्रह्मशब्दार्थः ॥ १२४ ॥ शिवसूत्रंशैवागमादिषुस्थितं ॥ १२५ ॥ अस्यैवविवरणार्थंवार्तिकमाह ॥ चैतन्यमितीति ॥ सर्वप्रपंचविषयकसर्वज्ञानक्रियात्मकंस्वातंत्र्यंचैतन्यपदार्थः ॥ तादृशस्वातंत्र्यस्वभावकोयःसपरमात्माकीर्तितइत्येतदर्थः ॥ १२६ ॥ एवंपरमात्मस्वरूपमुक्त्वाजीवस्वरूपंशिवसूत्रेणाह ॥ ज्ञानमिति ॥ १२७ ॥ तद्विवरणमाह ॥ ज्ञानमिति ॥ आत्मनस्तस्यविश्वस्यप्रपंचस्ययत्किंचिज्ज्ञानक्रियात्मकंस्वातंत्र्यंज्ञानपदार्थोबंधरूपइत्याद्यपदेनज्ञानपदेनेशःपशुवर्गस्यलक्षणमाहेत्यन्वयः॥इत्याहह्येपदेवेशइतिपाठांतरं ॥ १२८ ॥ एतद्द्वयमिति ॥ अधुनोक्तचैतन्यज्ञानात्मकंद्विविधंस्वातंत्र्यं ॥ पराशक्तेःमायाशक्तेःप्रथमस्पंदतांसृष्टेःप्रयोजिकांप्रथमचेष्टारूपतांगतमित्यर्थः॥ १२९॥अस्तुवन्निति ॥ इत्थंहिश्वेताश्वतरशाखायामाम्नातं ॥ नतस्यकार्यंकरणंचविद्यतेनतत्समश्चाभ्यधिकश्चदृश्यते ॥ परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाच॥तेध्यानयोगानुगताअपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढामिति ॥ जानामिकरोमीतिव्यवहारःकिंदेहेंद्रियादिसंभवउतात्मनोरूपमितिपृष्टस्योत्तरमाह ॥ ज्ञानक्रियेति ॥ १३० ॥ एतत्शंभोर्दृष्टित्रयंकर्तृमनोमध्यगं ॥ अनेनैतस्याणीयस्त्वमुक्तं ॥ इंद्रियेति ॥ इंद्रियद्वारगोचरंदेहमनुप्रविश्यपशुर्जीवरूपंसत्जानातिकरोतिचेत्यर्थः॥तदनुप्रविश्य॥सच्चत्यच्चाभवदितिश्रुतेरितिभावः ॥ १३१॥ प्रणवेति॥प्रपंचेनसहयत्प्रणवस्यैक्यंतादात्म्यंतस्यप्रदर्शकमित्यर्थः ॥ १३२ ॥

शक्त्यात्मकःशिवांशश्चशिवैक्याच्छिवसाम्यभाक्॥प्रज्ञानंब्रह्मवाक्येतुप्रज्ञानार्थःप्रदृश्यते॥१२४॥ प्रज्ञानशब्दश्चैतन्यपर्यायःस्यान्नसंशयः॥चैतन्यमात्मेतिमुनेशिवसूत्रंप्रवर्तितं॥१२५॥चैतन्यमितिविश्वस्यसर्वज्ञानक्रियात्मकं॥स्वातंत्र्यंतत्स्वभावोयःसआत्मापरिकीर्तितः॥१२६॥इत्यादिशिवसूत्राणांवार्तिकंकथितंमया ॥ ज्ञानंबंधइतीदंतुद्वितीयंसूत्रमीशितुः ॥ १२७॥ ज्ञानमित्यात्मनस्तस्यकिंचिज्ज्ञानक्रियात्मकं ॥ इत्याहाद्यपदेनेशःपशुवर्गस्यलक्षणं॥१२८॥ एतद्द्वयंपराशक्तेःप्रथमस्पंदतांगतं ॥ एनामेवपरांशक्तिंश्वेताश्वतरशाखिनः ॥ १२९ ॥ स्वाभाविकीज्ञानबलक्रियाचेत्यस्तुवन्मुदा ॥ ज्ञानक्रियेच्छारूपंहिशंभोर्दृष्टित्रयंमतं ॥ १३०॥ एतन्मनोमध्यगंसदिंद्रियद्वारगोचरं ॥ अनुप्रविश्यजानातिकरोतिचपशुःसदा ॥ १३१ ॥ तस्मादात्मनएवेदंरूपमित्येवनिश्चितं ॥ प्रपंचार्थंप्रवक्ष्यामिप्रणवैक्यप्रदर्शकं ॥ १३२ ॥ ॥ ॥ ॥ ॥ ॥

श्रुतिरिति ॥ ओमितीदंसर्वमितितैत्तिरीयश्रुतिःसर्वप्रपंचंप्रणवस्वरूपमाहेत्यर्थः ॥ तस्माद्वेतीति ॥ तस्माद्वाएतस्मादात्मनआकाशःसंभूतइत्युपक्रम्येत्यर्थः ॥ १३३ ॥ तात्पर्यमिति ॥ एतत्कथनमुक्तश्रुतिवाक्येष्वस्पष्टतयानुक्तस्यापिकस्यचित्क्रमस्यश्रुतितात्पर्यविषयत्वसद्भावबोधनार्थं ॥ तमेवक्रमंवक्तुंतस्माद्वेतीतिवाक्यस्थतदेतत्पदप्रतिपाद्यंसृष्टिहेतुभूतंपरमात्मस्वरूपमाह ॥ शिवशक्तीति ॥ मायाशक्तियुतःशिवएवसृष्टिहेतुःपरमात्मेतिश्रुतिवाक्यान्निश्चितमित्यर्थः ॥एतदेवाभिप्रेत्यतस्माद्वेतीतिवाक्यव्याख्यावसरेविद्यारण्याचार्यैरुक्तं ॥तस्मान्मायिनःपरमात्मनआकाशःसंभूतःउत्पन्नःपरमात्मैवाकाशवाय्वाद्याकारेणप्रतिभासतइत्यर्थः ॥यदुपादानकारणंमृद्रूपंतदेतत्स्वस्मादभिन्नंघटमारभते॥क्षीरस्वरूपमुपादानंस्वयंदध्याकारेणपरिणमते॥रज्जुरूपमुपादानमज्ञानेनसहितंसर्पा

ओमितीदंसर्वमितिश्रुतिराहसनातनी ॥ तस्माद्वेतीत्युपक्रम्यजगत्सृष्टिःप्रकीर्तिता ॥ २३३ ॥ तस्याश्रुतेस्तुतात्पर्यं वक्ष्यामिश्रूयतामिदं ॥ शिवशक्तिसमायोगःपरमात्मेतिनिश्चितं ॥ १३४॥ पराशक्तेस्तुसंजाताचिच्छक्तिस्तुतदुद्भवा ॥ आनंदशक्तिस्तज्जास्यादिच्छाशक्तिस्तदुद्भवा ॥ १३५ ॥ ज्ञानशक्तिस्ततोजाताक्रियाशक्तिस्तुपंचमी ॥ एताभ्यएवसंजातानिवृत्त्याद्याःकलामुने ॥ १३६ ॥ चिदानंदसमुत्पन्नौनादबिंदूप्रकीर्तितौ ॥ इच्छाशक्तेर्मकारस्तुज्ञानशक्तेस्तुपंचमः ॥ १३७ ॥ स्वरःक्रियाशक्तिजातोअकारस्तुमुनीश्वर ॥ शिवादीशानउत्पन्नस्ततस्तत्पुरुषोद्भवः ॥१३८॥ ततोघोरस्ततोवामःसद्योजातोद्भवस्ततः ॥ एतस्मान्मातृकादष्टत्रिंशन्मातृसमुद्भवः ॥ १३९ ॥ ॥

कारेणविवर्ततइति ॥ १३४ ॥ एवंचतस्माद्वाएतस्मादित्यनेनशक्तिमतोब्रह्मणःसकाशादाकाशःसंभूतइत्युक्तंतत्राद्यशक्तेःक्रमेणोत्पन्नानिशक्त्यंतराण्याह ॥ पराशक्तेरिति ॥ तदुद्भवाचिच्छक्त्युद्भवाआनंदशक्तिःतज्जाआनंदशक्तिजाइच्छाशक्तिरेवंक्रमेणान्वयः ॥ १३५ ॥ एताभ्यःचिदादिशक्तिभ्यः ॥ निवृत्त्याद्याइति ॥ क्वचिच्छत्त्यंत्याद्याइतिपाठः ॥ १३६ ॥ चिदानंदेति ॥ चिदानंदशक्तिभ्यांनादबिंदूक्रमेणोत्पन्नावित्यर्थः ॥ पंचमःस्वरउकारः ॥ १३७ ॥ एवंविलोमक्रमेणप्रणववर्णानामुत्पत्तिमुक्त्वेशानाद्युत्पत्तिक्रममाह ॥ शिवादिति ॥ १३८ ॥ मातृकात्अकारादिमातृकागणात् ॥ अष्टत्रिंशन्मातरोऽष्टत्रिंशत्कलाःपूर्वमुक्ताः ॥ १३९ ॥ ॥ ॥ ॥ ॥

॥१४०॥ वामसद्योद्भवेक्रमेणेतिशेषः ॥ ईशचिच्छक्तिमुखतइति ॥ ईशानचिच्छक्त्योर्मिथुनमारभ्येत्यर्थः ॥ विभोःशिवस्य ॥ १४१ ॥ अनुग्रहादिकृत्यानामनुग्रहतिरोभावसंहारस्थितिसृष्टिरूपाणां ॥ १४२ ॥ १४३ ॥ आद्यमिति ॥ आद्यंमिथुनमीशाचिच्छक्त्यात्मकमारभ्यवियदादिभूतपंचकंक्रमादुत्पन्नमासीदित्यन्वयः ॥ अतोभूतपंचकंयन्मयमीशचिच्छक्त्यादिमयंविदुरित्यर्थः ॥ १४४ ॥ १४५ ॥ व्यापकत्वमिति ॥ भूतानामाकाशादीनांव्यापकत्वमेवंपूर्वपूर्वमुत्तरस्माद्व्यापकमित्येवंरीत्याप्रकीर्तितमित्यर्थः ॥ १४६ ॥ तदेवस्पष्टीकरोति ॥ व्याप्यत्वमिति ॥ गंधादिक्रमतःगंधगुणापृथिवीरसगुणक

ईशानाच्छांत्यतीताख्याकलाजाताथपूरुषात् ॥ उत्पद्यतेशांतिकलाविद्याघोरसमुद्भवा॥१४०॥ प्रतिष्ठाचनिवृत्तिश्च वामसद्योद्भवेमते ॥ ईशचिच्छक्तिमुखतोविभोर्मिथुनपंचकं ॥१४१॥ अनुग्रहादिकृत्यानांहेतुःपंचकमिष्यते ॥ वाच्यवाचकसंबंधान्मिथुनत्वमुपेयुषि ॥ १४२ ॥ कलावर्णस्वरूपेस्मिन्पंचकेभूतपंचकं ॥ वियदादिक्रमादासीदुत्पन्नंमुनिपुंगव॥१४३॥आद्यंमिथुनमारभ्यपंचकंयन्मयंविदुः॥शब्दैकगुणआकाशःशब्दस्पर्शगुणोमरुत् ॥१४४॥ शब्दस्पर्शरूपगुणप्रधानोवन्हिरुच्यते ॥ शब्दस्पर्शरूपरसगुणकंसलिलंमतं ॥ १४५ ॥ शब्दस्पर्शरूपरसगंधाढ्यापृथिवीमता ॥ व्यापकत्वंचभूतानामिदमेवंप्रकीर्तितं ॥१४६॥ व्याप्यत्वंवैपरीत्येनगंधादिक्रमतोभवेत् ॥ भूतपंचकरूपोयंप्रपंचःपरिकीर्त्यते ॥१४७॥ विराट्सर्वसमष्ट्यात्माब्रह्मांडमितिचस्फुटं ॥ पृथिवीतत्वमारभ्यशिवतत्त्वावधिक्रमात् ॥ ॥ १४८ ॥ निलीयतत्वसंदोहंजीवएवविलीयते ॥ सशक्तिकेपुनःसृष्टौशक्तिद्वाराविनिर्गतः ॥ १४९ ॥ स्थूलप्रपंचरूपेणतिष्ठत्याप्रलयंसुखं ॥ निजेच्छयाजगत्स्रष्टुमुद्युक्तस्यमहेशितुः ॥ १५० ॥ प्रथमोयःपरिस्पंदःशिवतत्वंतदुच्यते ॥ एषैवेच्छाशक्तितत्वंसर्वकृत्यानुवर्तनात् ॥ १५१ ॥ ज्ञानक्रियाशक्तियुग्मेज्ञानाधिक्येसदाशिवः ॥ महेश्वरंक्रियोद्रेके तत्वंविद्धिमुनीश्वर ॥ १५२ ॥ ॥ ॥ ॥ ॥

जलव्याप्येत्येवंविपरीतक्रमेणपृथिव्यादीनांपूर्वपूर्वभूतंव्याप्यत्वमित्यर्थः ॥ व्यापकत्वमधिकप्रदेशवृत्तित्वंव्याप्यत्वंचान्यव्यापकाभ्यंतरेविद्यमानत्वं ॥१४७॥ विराडिति ॥ सएवप्रपंचःसर्वसमष्ट्यात्माविराट्ब्रह्मांडमितिस्फुटंकथ्यतइत्यर्थः ॥ पृथिवीति ॥ पृथिवीतत्वमारभ्यशिवतत्वपर्यंतंतत्वानांसंदोहंसमुदायंसशक्तिकेपरमेश्वरेनिलीयप्रविलाप्यजीवरूपएवविराट्विलीयतइत्यन्वयः ॥ १४८ ॥ विनिर्गतःजीवरूपोविराडितिसंबध्यते ॥१४९॥ शिवतत्वस्वरूपमाह ॥ निजेच्छयेति॥ १५० ॥ एषैवेति ॥ पूर्वमिच्छाशक्तितत्वंयदुक्तंसैषैवेच्छेत्यर्थः ॥ तत्रहेतुमाह ॥ सर्वकृत्येति ॥ सर्वेपुकृत्येपुसृष्ट्याद्यनुग्रहांतेष्वस्यानुवर्तनादित्यर्थः ॥ १५१ ॥ सदाशिवादितत्वस्वरूपमाह ॥ ज्ञानेति ॥ क्रियोद्रेकेज्ञानापेक्षयाक्रियाधिक्येमहेश्वराख्यंतत्वंविद्धीत्यर्थः ॥ १५२ ॥

शुद्धविद्यात्मकंविशुद्धज्ञानस्वरूपंशिवतत्वं ॥ स्वांगेति ॥ स्वांगरूपेषुस्वावयवभूतेषुभावेषुतत्वेषुमायातत्वविभेदधीः मायोत्पन्नतत्वाविभेदानांज्ञाता।शिवोय दानिजंरूपंपरमैश्वर्यपूर्वकंस्वमाययानिगूह्याखिलपदार्थानांसंग्राहकोभवेत्तदापुरुषइत्याख्यापुरुषएवेदꣳसर्वमित्यर्थकत्वेनप्रसिद्धिः॥सृष्टावनुप्रवेशोमानत्वेन तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतिःप्रादुरभवदित्यर्थः॥१५३॥१५४॥अयमेवेति॥अयमेवेश्वरएवसंसारीपशुर्जीवरूपोमाययामोहितत्वेनशिवादभिन्नंजगन्नजा नातिआत्मानंचशिवाद्भिन्नमित्यपिजानातीत्यर्थः ॥१५५॥१५६॥ चिद्घनःज्ञानस्वरूपःशिष्यःशिवरूपोभवतीत्यर्थः ॥ १५७ ॥ नित्यत्वव्यापकत्वस्वरू

ज्ञानक्रियाशक्तिसाम्यंशुद्धविद्यात्मकंमतं ॥ स्वांगरूपेषुभावेषुमायातत्वविभेदधीः ॥ १५३ ॥ शिवोयदानिजंरूपंपर मैश्वर्यपूर्वकं॥निगूह्यमाययाखिलपदार्थग्राहकोभवेत् ॥१५४॥ तदापुरुषइत्याख्यातत्सृष्ट्वेत्यभवच्छ्रुतिः ॥ अयमेव हिसंसारीमाययामोहितःपशुः ॥ १५५ ॥ शिवादभिन्नंनजगदात्मानंभिन्नमित्यपि ॥ जानतोस्यपशोर्देवमोहोभवति नप्रभोः ॥१५६॥ यथैंद्रजालिकस्यापियोगिनोनभवेद्भ्रमः ॥ गुरुणाज्ञापितैश्वर्यःशिवोभवतिचिद्घनः॥१५७॥ सर्वक र्तृत्वरूपाचसर्वज्ञत्वस्वरूपिणी ॥ पूर्णत्वरूपानित्यत्वव्यापकत्वस्वरूपिणी ॥ १५८ ॥ शिवस्यशक्तयःपंचसंकुचद्रूपभा स्कराः ॥ अपिसंकोचरूपेणविभांत्यइवनित्यशः ॥ १५९ ॥ पशोःकलाख्यविद्येतिरागकालौनियत्यपि ॥ तत्वपंच करूपेणभवंत्यत्रकलेतिसा ॥ १६० ॥ किंचित्कर्तृत्वहेतुःस्यात्किंचित्तत्वैकसाधनं ॥ साविद्यातुभवेद्रागोविषयेष्वनुरं जकः ॥१६१॥ कालोहिभावाभावानांभासनाभासनात्मकः ॥क्रमावच्छेदकोभूत्वाभूतादिरितिकथ्यते ॥१६२॥ इदं तुममकर्तव्यमिदंनेतिनियामिका ॥ नियतिःस्याद्विभोःशक्तिस्तदाक्षेपात्पतेत्पशुः ॥ १६३ ॥ एतत्पंचकमेवास्यस्वरू पावारकत्वतः ॥ पंचकंचुकमाख्यातमंतरंगंचसाधनं ॥ १६४ ॥ ॥ ॥ ॥

पिणीनित्यत्वस्वरूपिणीव्यापकत्वस्वरूपिणीचेत्यर्थः ॥ १५८ ॥ संकुचदिति ॥ संकुचद्रूपोभास्करोयाभ्यस्ताइत्यर्थः ॥ १५९ ॥ १६० ॥ कलादीनांस्व रूपमाह ॥ किंचिदित्यादिभिः ॥ १६१ ॥ क्रमावच्छेदकःभावाभावानांक्रमेणपरिच्छेदकः ॥ १६२ ॥ तदाक्षेपात्नियतित्यागात् ॥ १६३ ॥ अस्यपशोः स्वरूपावारकत्वतःस्वरूपस्याच्छादकत्वेन ॥ १६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥१६५॥ तदधःस्थःमायायाअधःस्थः ॥ १६६ ॥ १६७ ॥ १६८ ॥ १६९ ॥ १७० ॥ १७१ ॥ जीवनंजीवनसाधनात्मकःसंरंभोवेगरूपः ॥ १७२ ॥

वामदेवउवाच ॥ नियत्यधस्तात्प्रकृतेरुपरिस्थःपुमानिति ॥ पूर्वंत्रभवताप्रोक्तमिदानींकथमन्यथा ॥ १६५ ॥ माय
यासंकुचद्रूपस्तदधस्थइतिप्रभो ॥ श्रीसुब्रह्मण्यउवाच ॥ अद्वैतशैववेदोयंद्वैतंनसहतेक्वचित् ॥ १६६ ॥ सर्वज्ञःसर्व
कर्ताचशिवएवस्वमायया ॥ संकुचद्रूपइवसन्पुरुषःसंबभूवह ॥ १६७ ॥ कलादिपंचकेनैवभोक्तृत्वेनप्रकल्पितः ॥ प्र
कृतिस्थःपुमानेषभुंक्तेप्रकृतिजान्गुणान् ॥ १६८ ॥ इतिस्थानद्वयांतस्थःपुरुषोनविरोधकः ॥ संकुचन्निजरूपाणांज्ञा
नादीनांसमष्टिमत् ॥ १६९ ॥ सत्वादिगुणसाध्यंचबुद्ध्यादित्रितयात्मकं ॥ चित्तंप्रकृतितत्वंतदासीत्सत्वादिकारणा
त् ॥ १७० ॥ सात्विकादिविभेदेनगुणाःप्रकृतिसंभवाः ॥ गुणेभ्योबुद्धिरुत्पन्नावस्तुनिश्चयकारिणी ॥ १७१ ॥ अ
हंकारस्ततोबुद्धेःसंजातस्त्रिविधश्चसः ॥ जीवनंचाथसंरंभोगर्वश्चास्यत्रिधावपुः ॥ १७२ ॥ सत्वादिभेदात्सपुनस्तैज
सादित्रिभेदवान् ॥ अहंकारात्तैजसात्तुमनोबुद्धींद्रियाणिच ॥ १७३ ॥ जातानिमनसोरूपंस्यात्संकल्पविकल्पकं ॥
बुद्धींद्रियाणिश्रोत्रंत्वक्चक्षुर्जिह्वाचनासिका ॥ १७४ ॥ शब्दस्पर्शश्चरूपंचरसोगंधश्चगोचरः ॥ बुद्धींद्रियाणांक
थिताःश्रोत्रादिक्रमतस्ततः ॥ १७५ ॥ वैकारिकादहंकारात्कर्माक्षाणिप्रजज्ञिरे ॥ तानिवाक्पाणिपादौचपायूपस्थौ
चतक्रियाः ॥१७६॥ वदनादानगमनविसर्गानंदसंज्ञिताः ॥ भूतादिकादहंकारात्तन्मात्राण्यभवन्क्रमात् ॥१७७॥
तानिसूक्ष्माणिरूपाणिशब्दादीनामितिस्थितिः ॥ तेभ्यश्चाकाशवाय्वग्निपाथोभूमिजनिःक्रमात् ॥ १७८ ॥ अवका
शप्रदानत्वंवाहकत्वंचपाचनं ॥ संरंभोधारणंतेषांव्यापाराःपरिकीर्तिताः ॥ १७९ ॥ वामदेवउवाच ॥ भूतसृष्टिः
पुराप्रोक्ताकलादिभ्यःकथंपुनः ॥ आत्मतत्वमकारःस्याद्विद्यास्यादुस्ततःपरं ॥ १८० ॥ शिवतत्वंमकारःस्यात्सर्वत
त्वार्थकावुभौ ॥ बिंदुनादौतुतत्रत्यादेवताःशृणुसांप्रतं ॥ १८१ ॥ ब्रह्माविष्णुश्चरुद्रश्चमहेश्वरसदाशिवौ ॥ तेहिसा
क्षाच्छिवस्यैवमूर्तयःश्रुतिविश्रुताः ॥ १८२ ॥ ॥ ॥ ॥ ॥

॥ १७३ ॥ १७४ ॥ १७५ ॥ कर्माक्षाणिकर्मेंद्रियाणि ॥ १७६ ॥ १७७ ॥ १७८ ॥ तेषामाकाशादीनांक्रमेणेत्यर्थः ॥ १७९ ॥ विद्याविद्यातत्वंउःउ
कारः ॥ १८० ॥ १८१ ॥ १८२ ॥ ॥ ॥ ॥ ॥

भवंतीतीति ॥ इत्यादिवाक्येषुसत्सुभूतसृष्टिःपुराकलादिभ्यःकथंप्रोक्तेतिव्यवहितेनसंबंधः ॥ १८३ ॥ तानिपंचभूतानिभूतपतेःशिवस्यवपुःशरीररूपाणि ॥ ॥१८४॥१८५॥संशयच्छेदायविरोधंपरिहरति ॥ तन्मात्राणामिति ॥ भूतकारणात्‌भूतानामुत्पादकत्वेनसाधर्म्यात्‌ ॥ १८६ ॥ १८७ ॥ १८८ ॥ १८९ ॥ विश्रुताःसुमेर्वादयःप्रसिद्धाः ॥ १९० ॥ १९१ ॥ सर्वोवैरुद्रइतीति॥सर्वोवैरुद्रस्तस्मैरुद्रायनमोअस्तु ॥पुरुषोवैरुद्रःसन्महोनमोनमइतिनारायणीयोपनिषदि

तन्मात्रेभ्योभवंतीतिसंदेहोत्रमहान्प्रभो ॥ श्रीसुब्रह्मण्यउ॰ ॥ तस्माद्वेतिसमारभ्यभूतिसृष्टिक्रमेमुने॥१८३॥जातानिपंचभूतानिकलाभ्यइतिनिश्चितं ॥ स्थूलप्रपंचरूपाणितानिभूतपतेर्वपुः ॥ १८४ ॥ शिवतत्वादिपृथ्व्यंततत्वानामुदयक्रमे ॥ तन्मात्रेभ्योभवंतीतिवक्तव्यानिक्रमान्मुने ॥ १८५ ॥ तन्मात्राणांकलानामप्यैक्यंस्याद्भूतकारणात्‌ ॥ अविरुद्धत्वमेवात्रविद्धिब्रह्मविदांवर ॥ १८६ ॥ स्थूलसूक्ष्मात्मकेविश्वेचंद्रसूर्यादयोग्रहाः ॥ सनक्षत्राश्चसंजातास्तथान्येज्योतिषांगणाः ॥ १८७ ॥ ब्रह्मविष्णुमहेशादिदेवताभूतजातयः ॥इंद्रादयोपिदिक्पालादेवाश्चपितरोऽसुराः ॥ १८८ ॥ राक्षसामानुषाश्चान्येजंगमत्वविभागिनः ॥ पशवःपक्षिणःकीटाःपन्नगादिप्रभेदिनः ॥ १८९ ॥ तरुगुल्मलतौषध्यःपर्वताश्चाष्टविश्रुताः ॥ गंगाद्याःसरितःसप्तसागराश्चमहर्धयः ॥ १९० ॥ यत्किंचिद्वस्तुजातंतत्सर्वमत्रप्रतिष्ठितं ॥ स्त्रीपुंरूपमिदंविश्वंशिवशक्त्यात्मकंबुधैः ॥ १९१ ॥ भवादृशैरुपास्यंस्याच्छिवज्ञानविदांवरैः ॥ सर्वंब्रह्मेत्युपासीतसर्वोवैरुद्रइत्यपि ॥ १९२ ॥ श्रुतिराहमुनेतस्मात्प्रपंचात्मासदाशिवः ॥ अष्टत्रिंशत्कलान्याससामर्थ्याद्वैतभावनात्‌ ॥ १९३ ॥ सदाशिवोहमेवेतिभावितात्मागुरुःशिवः ॥ प्रपंचदेवतायंत्रमंत्रात्मानहिसंशयः ॥ १९४ ॥ एवंविधाचार्यकृपापाटिताखिलबंधनः ॥ शिशुःशिवपदासक्तोगुर्वात्माभवतिध्रुवं ॥ १९५ ॥ यदस्तिवस्तुतत्सर्वंगुणप्राधान्ययोगतः ॥ समस्तंव्यस्तमपिचप्रणवार्थंप्रचक्षते ॥ १९६ ॥ ॥ ॥

॥ १९२ ॥ अष्टत्रिंशदिति ॥ अष्टत्रिंशत्कलान्यासेसामर्थ्यंयस्यतस्यशिवस्याद्वैतभावनादहमेवसदाशिवइतिभावितात्माप्रपंचदेवतायंत्रमंत्रात्मागुरुःशिव एवभवेदत्रनसंशयइत्यन्वयः ॥ १९३ ॥ १९४ ॥ शिशुःशिष्यःगुर्वात्मापूज्यात्मा ॥ १९५ ॥ १९६ ॥ ॥ ॥

मद्वचइति ॥ योदेवादिर्मदगर्वितःसन्रागादिदोषरहितंवेदसारंशिवोदितंमद्वचोऽन्यथामनुतेतस्यानयामच्छक्त्याशिरश्छियासमित्यग्रिमेणान्वयः ॥१९७॥
॥१९८॥१९९॥ पशुरिति ॥ पशुर्जीवोपिपशुपतिःशिवरूपोभवेदितिशेषः ॥२००॥ भक्त्याप्रवणेषुनम्रेषु ॥२०१॥ वेदांतनिष्ठितमिति ॥ वेदांतेषुब्रह्मस्व
रूपप्रतिपादकवेदभागेषुनिष्ठापर्यवसानंसंजातंयस्यतत् ॥ तत्पादारविंदेति ॥ तस्यषडाननस्यपादारविंदयोर्विहरन्सन्षट्पदत्वंप्राप्येत्यर्थः ॥ २०२ ॥ इति

रागादिदोषरहितंवेदसारंशिवोदितं ॥ योह्यन्यथैतन्मनुतेमद्वचोमदगर्वितः ॥ १९७ ॥ देवोवामानवःसिद्धोगंधर्वोम
नुजोपिवा ॥ दुरात्मनस्तस्यशिरश्छिद्यासमनयाध्रुवं ॥ ९८ ॥ मच्छक्त्यारिपुकालाग्निकल्पयानहिसंशयः ॥ भवाने
वमुनेसाक्षाच्छिवाद्वैतविदांवरः ॥ ९९ ॥ भवत्कटाक्षसंपर्कात्पशुःपशुपतिर्ध्रुवं ॥ इदंरहस्यंपरमंप्रतिष्ठितमतस्त्वयि॥
॥ २०० ॥ त्वमपिश्रद्धयाभक्त्याप्रवणेष्वेवसादरं ॥ उपदिश्यचतान्सर्वान्संयोज्यपरमेश्वरे ॥ विचरन्लोकरक्षा
यैसुखमक्षयमाप्नुहि ॥ २०१ ॥ सूतउवाच ॥ श्रुत्वैवमद्भुतमतंहिषडाननोक्तंवेदांतनिष्ठितमृषिस्तुविनम्रमूर्तिः ॥ भू
लाप्रणम्यबहुशोभुविदंडवत्तत्पादारविंदविहरन्मधुमत्वमाप ॥ २०२ ॥ इतिश्रीशिवमहापुराणेकैलाससंहितायामु
परिभागेदशमोऽध्यायः ॥१०॥ छ ॥ वामदेवउवाच ॥ भगवन्सर्वतत्वज्ञषण्मुखामृतवारिधे ॥ गुरुत्वंकथमेतेषांय
तीनांभावितात्मनां ॥ १ ॥ जीवानांभोगमोक्षादिसिद्धिःसिध्यतियद्वशात् ॥ पारंपर्यंविनानैषामुपदेशाधिकारिता ॥
॥ २ ॥ एतच्चक्षौरकर्मांगस्नानंचकथमीदृशं ॥ श्रीसुब्रह्मण्यउवाच ॥ योगपट्टंप्रवक्ष्यामिगुरुत्वंयेनजायते ॥ ३ ॥ वै
शाखेश्रावणेवास्यान्मास्याश्वयुजिकार्तिके ॥ मार्गशीर्षेचमाघेवाशुक्लपक्षेशुभेदिने ॥ ४ ॥ पंचम्यांपौर्णमास्यांवाकृ
तप्राभातिकक्रियः ॥ लब्धानुज्ञस्तुगुरुणास्नात्वानियतमानसः ॥ ५ ॥ पर्यंकशौचंकृत्वातद्वाससांगंप्रमृज्यच ॥ द्वि
गुणंदोरमाबध्यपरिधायचवाससी ॥ ६ ॥ क्षालितांघ्रिर्द्विराचम्यभस्मसद्यादिमंत्रतः ॥ समादायाथसंधार्यसमुद्धूल
नमार्गतः ॥ ७ ॥ गृहीतहस्तोगुरुणाहस्ताभ्यांप्राङ्मुखोयथा ॥ तथोपवेशितस्तिष्ठेन्मंडपेसमलंकृते ॥ ८ ॥

श्रीशैवमहापुराणकैलाससंहिताटीकायांसारबोधिन्यामुत्तरभागेदशमोऽध्यायः ॥ १० ॥ ॐनमःशिवाय ॥ योगपट्टविधानंयद्गुरुत्वप्राप्तिसाधनं ॥ सस्ना
नादिक्रियंप्रोक्तमेकादशइहोच्यते ॥ १ ॥ एतेषांपूर्वमुक्तानां ॥ १ ॥ पारंपर्यंविनापरंपरागतसंप्रदायज्ञानंविना ॥ २ ॥ गुरुत्वमुपदेशाधिकारित्वं ॥ ३ ॥
॥ ४ ॥ गुरुणागुरोः ॥ ५ ॥ पर्यंकशौचमिति ॥ तद्विधिस्तुसंन्यासपद्धतिप्रभृतिग्रंथेषुद्रष्टव्यः ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ॥

गुर्वासनवरेगुरुदत्तासनवरे ॥ अस्त्रतःअस्त्रमंत्रेण ॥ ९ ॥ अस्त्रवर्मभ्यांअस्त्रकवचमंत्राभ्यां ॥ १० ॥ आपूर्यतत्रपूरयित्वा ॥ तत्शंखास्थितंजलं ॥ ११ ॥ अस्त्रेणअस्त्रमंत्रेण ॥ वर्मणाकवचमंत्रेणधेनुशंखाख्यमुद्रेप्रदर्शयेदित्यन्वयः ॥ १२ ॥ १३ ॥ तंतुपरिष्कृतंसूत्रेणवेष्टितं ॥१४॥ पंचत्वचःअश्वत्थप्लक्षजंब्वाम्रवटद्रुसंभवाःपंचपत्राणिपंचपल्लवाःतेचअश्वत्थप्लक्षोडुंबराम्रवटतरुभवाः ॥ मृत्तिकाभिः गजाश्वरथवल्मीकनदीसंगमस्थानेषुस्थिताः ॥ १५ ॥

गुर्वासनवरेशुद्धेचैलाजिनकुशोत्तरे ॥ अथदेशिकआदायशंखंसाधारमस्त्रतः ॥ ९ ॥ शोध्यतत्पुरतःस्थाप्यसंपूज्यकुसुमादिभिः ॥ साधारंशंखमप्यस्त्रवर्मभ्यांशोधितंजलं ॥ १० ॥ आपूर्यपूर्ववत्पूज्यषडंगोक्तक्रमेणच ॥ सप्तधैवाभिमंत्र्याथप्रणवेनपुनश्चतत् ॥ ११ ॥ अभ्यर्च्यगंधपुष्पाद्यैर्धूपदीपौप्रदर्श्यच ॥ संरक्ष्यास्त्रेणावगुंठ्यवर्मणाथप्रदर्शयेत् ॥ १२ ॥ धेनुशंखाख्यमुद्रेचदेशिकःस्वपुरःपुनः ॥ शंखदक्षिणदेशेतुपूजार्घ्योक्तविधानतः ॥ १३ ॥ मंडलंकृतमभ्यर्च्यसुगंधकुसुमादिभिः ॥ साधारंशोधितंशुद्धघटंतंतुपरिष्कृतं ॥ १४ ॥ धूपितंस्थापितंशुद्धवासितोदप्रपूरितं ॥ पंचत्वक्पंचपत्रैश्चमृत्तिकाभिश्चपंचभिः ॥ १५ ॥ मीलितंचसुगंधेनलोलितंसमलंकृतं ॥ वस्त्राम्रदलकूर्चाग्रनालिकेरसुमैस्ततः ॥ १६ ॥ पंचरत्नानिविन्यस्यनीलंमाणिक्यहेमनी ॥ प्रवालगोमेदकेचरत्नाभावेहिरण्मयं ॥ १७॥ नम्लुस्कमितिसंप्रोच्यग्लूमित्यंतेसमर्चयेत् ॥ आधारशक्तिमारभ्ययजनोक्तविधानतः ॥ १८ ॥ देवमावाह्यसंपूज्यपंचावरणमार्गतः ॥ निवेद्यपायसान्नंचतांबूलादियथापुरा ॥ १९ ॥ नामाष्टकार्चनांतंचकृत्वातमभिमंत्र्यच ॥ प्रणवाष्टोत्तरशतंब्रह्मभिःपंचभिःक्रमात् ॥ २० ॥ सद्यादीशांतमप्यस्त्ररक्षितंवर्मणापुनः ॥ अवगुंठ्यप्रदर्श्याथधूपदीपौप्रदर्श्यच ॥ २१ ॥ धेनुयोन्याख्यमुद्रेचदर्भैराछाद्यमस्तकं ॥ मंडपस्यैशदिग्भागेचतुरस्रंप्रकल्पयेत् ॥ २२ ॥ तदुपर्यासनंकल्प्यतत्रसंस्थाप्यतंशिशुं ॥ ततःकुंभंसमुत्थाप्यस्वस्तिवाचनपूर्वकं ॥ २३ ॥ अभिषिंचेद्गुरुःशिष्यंप्रादक्षिण्येनमस्तके ॥ प्रणवंपूर्वमुच्चार्यसप्तधाब्रह्मभिस्ततः ॥ २४ ॥ पंचभिश्चाभिषेकंचशंखोदेनाभिवेष्टयेत् ॥ चरुंदीपंप्रदर्श्याथवाससापरिमृज्यच ॥ २५ ॥ ॥ ॥ ॥ ॥

लोलितंमिश्रितं ॥ सुमानिपुष्पाणि ॥ १६ ॥ पंचरत्नान्याह ॥ नीलमिति ॥ हिरण्मयमिति ॥ रत्नाभावेहिरण्यमेवरत्नमित्यर्थः ॥ स्वार्थेमयट् ॥ १७ ॥ ॥ १८ ॥ १९ ॥ नामाष्टकंभवःशर्वोरुद्रइत्याद्युक्तं ॥ तंकलशं ॥ २० ॥ २१ ॥ ऐशदिग्भागेऐशान्यां ॥ २२ ॥ २३ ॥ शिशुंशिष्यं ॥ २४ ॥ अभिषेचयेदितिक्वचित् ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २६ ॥ २७ ॥ तंशिष्यं ॥ २८ ॥ २९ ॥ ३० ॥ दक्षश्रुतौदक्षिणकर्णे ॥ ३१ ॥ ३२ ॥ अवांतराणांवाक्यानामिति ॥ अवांतराणांब्रह्मणःपरोक्षज्ञानस्यसंपादकानांप्रज्ञानंब्रह्मेत्यादीनां ॥ अपरोक्षज्ञानस्यसंपादकानांमहावाक्यानामप्युपलक्षणमेतत् ॥ तानिचअहंब्रह्मास्मीत्यादीनि ॥ अर्थतात्पर्यमिति॥

नूतनंदोरकौपीनंवाससीपरिधायच ॥ क्षालितांघ्रिर्द्विराचम्यधृतभस्मगुरुःशिशुं ॥ २६ ॥ हस्ताभ्यामवलंब्याथह स्तौमंडपमध्यतः ॥ आसनेसंप्रवेश्याथकल्पितेसुखमास्थितं ॥ २७ ॥ पूर्वाभिमुखमात्मीयतत्वज्ञानाभिलाषिणं॥ स्वासनस्थोगुरुर्ब्रूयादमलात्माभवेतितं ॥ २८ ॥ गुरुश्चपरिपूर्णोस्मिशिवइत्यचलस्थितिः ॥ समाधिमास्थायततोमुहूर्तंगूढमानसः ॥ २९ ॥ पश्चादुन्मील्यनयनेपश्यन्शिष्यमनाकुलः ॥ स्वहस्तंभसितालिप्तंविन्यस्यशिशुमस्तके॥ ॥ ३० ॥ दक्षश्रुतावुपदिशेद्धंसःसोहमितिस्फुटं ॥ तत्राद्योहंपदस्यार्थःशक्त्यात्मासशिवःस्वयं ॥ ३१ ॥ सएवाहंशिवोस्मीतिस्वात्मानंसंविभावय ॥ यइत्यणोरर्थतत्वमुपदिश्यततोवदेत् ॥ ३२ ॥ अवांतराणांवाक्यानामर्थतात्पर्यमादरात् ॥ वाक्यानिवच्मितेब्रह्मन्सावधानमतिःशृणु ॥ ३३ ॥ प्रज्ञानंब्रह्म ॥ अहंब्रह्मास्मि ॥ तत्वमसि ॥ अयमात्माब्रह्म ॥ ईशावास्यमिदंसर्वं ॥ प्राणोस्मिप्रज्ञानात्मा ॥ यदेवेहतदमुत्रयदमुत्रतदन्विह ॥ अन्यदेवतद्विदितादथोअविदितादधि ॥ एषतआत्मांतर्याम्यमृतः ॥ सयश्चायंपुरुषे यश्चासावादित्ये सएकः ॥ अहमस्मिपरंब्रह्मपरापरपरात्परं ॥ वेदशास्त्रगुरुत्मातुस्वयमानंदलक्षणं ॥ ३४ ॥ सर्वभूतस्थितंब्रह्मतदेवाहंनसंशयः ॥ तत्वस्यप्राणोहमस्मिपृथिव्याःप्राणोहमस्मि ॥ ३५ ॥ अपांचप्राणोहमस्मितेजसश्चप्राणोहमस्मि ॥ वायोश्चप्राणोहमस्मि आकाशस्यप्राणोहमस्मि ॥ त्रिगुणस्यप्राणोहमस्मि ॥ सर्वोहंसर्वात्मकोहंसंसारीयद्भूतंयच्चभव्यं ॥ यद्वर्तमानं सर्वात्मकत्वादद्वितीयोहं ॥ ३६ ॥ सर्वंखल्विदंब्रह्मसर्वोहंविमुक्तोहं ॥ योसौसोहंहंसःसोहमस्मिइत्येवंसर्वत्रसदाध्यायेदिति ॥ ३७ ॥ ॥ ॥ ॥ ॥

वक्तुमितिशेषः ॥ ३३ ॥ तान्येववाक्यान्याह प्रज्ञानमिति ॥ अर्थस्त्वेषामनुपदंस्फुटीभविष्यति ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

पूर्वमेवेति॥प्रज्ञानंब्रह्मवाक्येतुप्रज्ञानार्थःप्रदृश्यते॥प्रज्ञानशब्दश्चैतन्यपर्यायःस्यान्नसंशयइतिपूर्वोक्तश्लोकादिनाप्रबोधितइत्यर्थः॥ एतद्वाक्यमैतरेयोपनिषदिएष ब्रह्मैषइंद्रइत्युपक्रम्यसर्वंतत्प्रज्ञानेत्रंप्रज्ञानेप्रतिष्ठितंप्रज्ञानेत्रोलोकःप्रज्ञाप्रतिष्ठाप्रज्ञानंब्रह्मेतिश्रूयते ॥ तच्चपूर्वोक्तंसर्वंस्थावरमचलंचसर्वंतदशेषतःप्रज्ञानेत्रंप्रज्ञ प्तिःप्रज्ञातत्त्वब्रह्मैवनीयतेसत्तांप्राप्यतेऽनेनेतिनेत्रंप्रज्ञानेत्रंयस्यतदिदंप्रज्ञानेत्रंप्रज्ञानेब्रह्मण्युत्पत्तिस्थितिलयकालेषुप्रतिष्ठितंप्रज्ञाश्रयमित्यर्थः॥ प्रज्ञानेत्रोलोकः पूर्ववत् ॥ प्रज्ञाचक्षुर्वासर्वमेषलोकः॥ प्रज्ञाप्रतिष्ठासर्वस्यजगतस्तस्मात्प्रज्ञानंब्रह्मेतिव्याख्यातंभगवद्भिर्भाष्यकारैः॥ अहंब्रह्मास्मीतिवाक्यार्थंवक्तुमहंपदार्थ माह ॥ शक्त्यात्मेति ॥ ३८ ॥ तत्राप्यकारहकारयोःशिवःशक्त्यात्माचक्रमेणार्थइत्याह ॥ अकारइति ॥ व्योमरूपःसर्वकारणरूपः ॥ ३९ ॥ ॥ ४० ॥ पूर्वमेवेति ॥ शिवशक्त्योस्तुसंयोगादानंदःसततोदितः ॥ प्रकाशतेतमुद्दिश्यमुनयःक्षीणकल्मषाः ॥ शिवेमनःसमाधायप्राप्ताःशिवमनामयं ॥ सर्वात्मत्वंतयोरेवब्रह्मेत्युपनिषत्सुचेत्यादिभिःश्लोकैःपूर्वमेवकथितमित्यर्थः॥ सोहमिति ॥ सपरमात्माहमस्मीतिभावयेदित्यर्थः॥ योहमस्मिब्रह्माहमस्मि॥

प्रज्ञानंब्रह्मवाक्यार्थःपूर्वमेवप्रबोधितः॥ अहंपदस्यार्थभूतःशक्त्यात्मापरमेश्वरः ॥ ३८ ॥ अकारःसर्ववर्णाग्र्यःप्र काशःपरमःशिवः॥ हकारोव्योमरूपःस्याच्छक्त्यात्मासंप्रकीर्तितः॥ ३९ ॥ शिवशक्त्योस्तुःसंयोगादानंदःसतता दितः॥ ब्रह्मेतिशिवशक्त्योस्तुसर्वात्मत्वमितिस्फुटं॥ ४० ॥ पूर्वमेवोपदिष्टंतत्सोहमस्मीतिभावयेत्॥

अहमस्मिब्रह्माहमस्मीतिनारायणोपनिषद्गतवाक्ययोरप्ययमेवार्थः॥ इदंवाक्यमहंब्रह्मास्मीतितदात्मानमेवाऽवेदहंब्रह्मास्मीतितस्मात्तत्सर्वमभवदितिबृहदार ण्यकभाष्येपठितं ॥ तच्चसर्वशाखोपनिषत्सुब्रह्मैकत्वविज्ञानंनिश्चितोर्थः ॥ तत्रयदिसंसारीब्रह्मणोऽन्यआत्मानमवेदितिकल्पेतइष्टस्यार्थस्यबाधनंस्यात् ॥ तथाचशास्त्रमुपक्रमोपसंहारयोर्विरोधादसमंजसंकल्पितंस्याद्व्यपदेशानुपपत्तेश्च ॥ यदिचआत्मानमेवावेदितिसंसारिणएववेद्यत्वोपपत्तेः॥ आत्मेतिवेत्तुरन्य दुच्यतइतिचेन्न ॥ अहंब्रह्मास्मीतिविशेषणात् ॥ अन्यश्चेद्वेद्यःस्यादयमसावितिविशेष्येत ॥ नत्वहमस्मीति ॥ अहमस्मीतिविशेषणात्मानमेवावेदितिचाव धारणान्निश्चितमात्मैषब्रह्मेत्यवगम्यते ॥ तथाचसत्युपपन्नोब्रह्मविद्याव्यपदेशोनान्यथाविद्याह्यन्यथास्यात्॥नचब्रह्मत्वाब्रह्मत्वेह्येकस्योपपन्नेपरमार्थतस्तमः प्रकाशाविवभानोर्विरुद्धत्वात्नचोभयंनिमित्तत्वेब्रह्मविद्येतिनिश्चितोव्यपदेशोयुक्तस्तदाब्रह्मविद्यासंसारिविद्याचस्यात् ॥ नचवस्तुनोऽधर्मजरतीयत्वंकल्प यितुंयुक्तं॥ तत्वज्ञानविवक्षायांश्रोतुःसंशयोहितथास्यात् ॥ निश्चितंचज्ञानंपुरुषार्थसाधनमिष्यते ॥ यस्यस्यादद्धानविचित्सास्तिसंशयात्माविनश्यतीतिश्रु तिस्मृतिभ्यामतोनसंशयितोवाक्यार्थोवाच्यःपरहितार्थिनेतिव्याख्यातंभाष्ये ॥ ॥ ॥ ॥ ॥

ननुपूर्वंयदुपदिष्टंतत्सोहमस्मीतिभावयेदितितेनशक्त्यात्मनाशिवेनाभेदभावनाकर्तव्येत्युक्तंभवति ॥ तत्त्वमस्यहंब्रह्मास्मीत्यादिषुतुविशुद्धब्रह्मणासोपदिष्टा॥
तथाचाहंब्रह्मास्मीत्यस्यसोहमस्मीतिभावयेदितिविवरणमनुपपन्नंस्यादतआह॥तत्त्वमितितीति ॥ तत्त्वमसीत्येतद्वाक्यस्थतत्पदेनापिसशब्दार्थःशक्त्यात्मैवबो
धितइत्यर्थःएवमहंब्रह्मास्मीत्यत्रब्रह्मशब्देनापीतिबोध्यं॥४१॥अन्यथाएवमर्थानंगीकारे॥विपरीतार्थभावनेति॥अहंब्रह्मास्मीतिमूलवाक्येशुद्धब्रह्माभेदभावना
प्रतीयतेतद्विवरणवाक्येतुशक्त्यात्मकाभेदभावनोपदिश्यतइतिभिन्नार्थसंभावनास्यादित्यर्थः॥ननुशुद्धब्रह्माभेदभावनाभिप्रायेणतदहमस्मीत्येवविवरणतात्पर्य
मस्तुनतुशक्त्यात्मकाभेदइत्यतआह॥अहंशब्दस्त्विति ॥ तथाचाहंपदस्यार्थभूतःशक्त्यात्मापरमेश्वरइतिपूर्वमुक्तयालिंगभेदेनविरोधाच्छाब्दमर्यादयातदहंपदा
र्थयोरभेदान्वयेनोपपद्येतेतिभावः॥४२॥तदेवाह॥एवमिति ॥ ननुवेदाःप्रमाणमित्यादाविवलिंगविशेषाविवक्षयानोक्तानुपपत्तिरतआह ॥ स्त्रीपुंरूपस्येति॥स्त्रीपुं
सरूपमयस्यजगद्रूपकार्यस्यतादृशमेवकारणमुपादानंभवितुमर्हतितच्चान्यथाविलक्षणंभवेदित्यर्थः ॥सगुणब्रह्माभेदभावनाद्वारैवनिर्गुणब्रह्मतादात्म्यलाभोभ
वतीत्येतत्प्रकरणतात्पर्यं ॥४३॥ तस्मादत्रतत्पदेनशक्त्यात्मैवग्राह्यइत्यत्रयुक्तिमाह ॥ सतत्त्वामिति ॥ तत्वमसीतिवाक्यात्प्राक्तनंयत्सआत्मेतिवाक्यंतस्मा
त्सइत्यनुवर्त्यसशक्त्यात्मातद्ब्रह्मरूपस्त्वमासिश्वेतकेतोइत्यर्थः ॥ तत्त्वमसीत्येतद्वाक्यंसयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वमसिश्वेतकेतोइ

तत्त्वमित्यत्रतदितिसशब्दार्थःप्रबोधितः ॥ ४१ ॥ अन्यथासोहमित्यत्रविपरीतार्थभावना ॥ अहंशब्दस्तुपुरुषस्त
दितिस्यान्नपुंसकं ॥ ४२ ॥ एवमन्योन्यवैरुध्यादन्वयोनभवेत्तयोः ॥ स्त्रीपुंरूपस्यजगतःकारणंचान्यथाभवेत् ॥४३॥
सतत्त्वमसिइत्येवमुपदेशार्थभावना ॥ अयमात्मेतिवाक्येचपुंरूपंपदयुग्मकं ॥ ४४ ॥ ॥ ॥

तिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवाचेतिछांदोग्येषष्ठेऽध्यायेश्वेतकेतुंप्रत्युद्दालकेनाऽरुणिनातत्पित्रोक्तं॥तच्चयःसदाख्यएषउक्तोऽणिमाऽणु
भावोजगतोमूलमैतदात्म्यमेतत्सदात्मायस्यसर्वस्यतदेतदात्मातस्यभावऐतदात्म्यमेतेनसदाख्येनात्मनात्मवत्सर्वमिदंजगन्नान्योऽस्यास्त्यात्मासंसारीनान्यद
तोऽस्तिद्रष्टृनान्यदतोऽस्तिश्रोत्रित्यादिश्रुत्यंतरात् ॥ येनचात्मनात्मवत्सर्वमिदंजगत्तदेवसदाख्यंकारणं ॥ सत्यंपरमार्थसत् ॥ अतःसएवात्माजगतःप्रत्यक्स्व
रूपंसतत्त्वंयाथात्म्यं ॥ आत्मशब्दस्यनिरुपपदस्यप्रत्यगात्मनिगवादिशब्दवन्निरूढत्वात् ॥ अतस्तत्सत्त्वमसीतिहेश्वेतकेतोइत्येवंप्रत्यायितःपुत्रआह ॥ भू
यएवमाभगवान्विज्ञापयतुयद्भवदुक्तंतत्संदिग्धंममाहन्यहनिसर्वाःप्रजाःसुषुप्तौसत्संपद्यंतइत्येतद्येनसत्संपद्यनविदुःसत्संपन्नावयमिति ॥ अतोदृष्टांतेनमांप्रत्या
ययत्वित्यर्थः ॥ एवमुक्तस्तथास्तुसोम्येतिहोवाचपितेति ॥ अयमात्मेतिवाक्येतुनपूर्वोक्तान्वयानुपपत्तिरित्याह ॥ अयमिति ॥ पदयुग्मकंअयमात्मेतिचपदद्व
यम् ॥ अयमात्माब्रह्मेतिमांडूक्योपनिषदिपठितं ॥ तच्चायमितिचतुष्पात्त्वेनप्रविभज्यमानंप्रत्यगात्मतयाभिनयेनर्निर्दिशति ॥ अयमात्मेति ॥ सोयमात्माओं
काराभिधेयःपरापरत्वेनव्यवस्थितश्चतुष्पात्कार्षापणवन्नगौरिवेतित्रयाणांविश्वतैजसप्राज्ञानांपूर्वपूर्वप्रविलापनेनतुरीयस्यप्रतिपत्तिरितिव्याख्यातंभगवत्पादैः

ईशावास्यमिदंसर्वमित्येतदर्थमाह ॥ ईशेनेति ॥ ईशेनशिवेनैवरक्षणीयत्वात्इदंजगदीशावास्यमित्यर्थः ॥ धातूनामनेकार्थत्वाद्वसधातोरत्ररक्षणमर्थः ॥ वाजसनेयसंहितोपनिषद्गतमेतद्वाक्यं ॥ एतच्चईष्टइतीट्तेनेशाईशितापरमेश्वरःपरमात्मासर्वस्य ॥ सहिसर्वमीष्टेसर्वजंतूनामात्मासन् ॥ तेनस्वेनात्मनेशावास्यमाच्छादनीयं ॥ किमिदंसर्वंयत्किंचिज्जगत्यामितिव्याख्यातंभाष्यकारैः ॥ प्राणोऽस्मिप्रज्ञात्मेत्यस्याऽर्थमाह ॥ प्रज्ञानात्मेति ॥ प्रज्ञानात्मकब्रह्मस्वरूपोऽहंप्राणपदार्थोस्मीत्येतदर्थः ॥ एतच्चप्राणस्तथानुगमादित्यधिकरणेप्रतर्दनोहवैदैवोदासिरिंद्रस्यप्रियंधामोपाजगामयुद्धेनचपौरुषेयेणचेत्युपक्रम्यसहोवाचप्राणोस्मिप्रज्ञात्मातंमामायुरमृतमित्युपास्वेतिकौषीतकिब्राह्मणोपनिषद्वाक्यंविषयवाक्यत्वेनोपन्यस्तंभाष्यकारैः ॥ तत्रप्राणशब्देनवायुमात्रंदेवताविशेषोजीवोब्रह्मवाग्राह्यमितिसंशयेलिंगादिभिर्वाय्वादिग्रहणंयुज्यतइतिपूर्वपक्षमुपन्यस्यप्राणशब्देनपरंब्रह्मैवात्रविवक्षितमितिसिद्धांतितम् ॥ यदेवेहेतिकठवल्लीवाक्यस्यार्थमाह ॥ यदिति ॥ यदेवेहकार्यकारणोपाधिसमन्वितंचैतन्यंसंसारधर्मवदवभासमानमविवेकिनांतदेवस्वात्मस्थममुत्रजगत्कारणत्वोपाधौकार

ईशेनरक्षणीयत्वादीशावास्यमिदंजगत् ॥ प्रज्ञानात्मायदेवेहतदमुत्रेतिचिंतयेत् ॥ ४५ ॥ यःसएवेतिविद्वद्भिःसिद्धांतिभिरिहोच्यते ॥ उपरिस्थितवाक्येचयोमुत्रसइहस्थितः ॥ ४६ ॥ इतिपूर्ववदेवार्थःपुरुषोविदुषांमतः ॥ अन्यदेवतद्विदितादथोअविदितादधि ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥

णत्वमात्रोपहितमितिचिंतयेदित्यर्थः ॥ ४५ ॥ एतस्यैवदृढीकरणायपुनराह ॥ यइति ॥ यःकार्योपाधिर्जीवःसएवकारणोपाधिरीश्वरइतिसिद्धांतिभिर्विद्वद्भिरिहोच्यतइत्यर्थः॥सिद्धांतिभिरित्युक्त्याभेदवादस्त्वपसिद्धांतइतिसूचितम् ॥ उपरिस्थितवाक्येयदमुत्रतदन्विहेतिवाक्ये॥योमुत्रेति ॥ यःकारणोपाधिविशिष्टःसएवेहकार्योपाधौजीवरूपेणास्थितइतिपूर्ववाक्यवदेवफलितोऽर्थःसचार्थःपुरुषरूपएवविदुषांमतइत्यर्थः ॥ एतद्वाक्यंयद्ब्रह्मादिषुस्थावरांतेषुवर्तमानंतत्तदुपाधित्वादब्रह्मवदवभासमानंसंसार्यन्यःपरस्माद्ब्रह्मणइतिमाभूत्कस्यचिदाशंकेतीदमाह ॥ यदेवहकार्यकारणोपाधिसमन्वितंसंसारधर्मवदवभासमानमविवेकिनांतदेवस्वात्मस्थममुत्रनित्यविज्ञानघनस्वभावंसर्वसंसारधर्मवर्जितंब्रह्मयच्चामुत्रास्मिन्नात्मानिस्थितंतदन्विहतदेवेहनामरूपकार्यकारणोपाधिमनुभाव्यमानंनान्यदितिव्याख्यातंभगवद्भिः ॥ ४६ ॥ अन्यदेवेति ॥ शाब्दज्ञानंविदिक्रियाशब्दार्थः ॥ विदितंकार्यमविदितंकारणंतस्मादधिअन्यदित्यर्थः ॥ ४७ ॥ ॥ ३३ ॥

फलस्यापीति ॥ निःश्रेयसफलस्यापिवैपरीत्यविभावनाविदिताविदितान्यत्वोक्त्याभेदबुद्धावप्राप्तिसंभावनायथास्यात्तद्देवतथैवात्रवक्ष्यामीत्यन्वयः ॥४८॥ अयथेति ॥ अन्यदेवेतिपूर्ववाक्येविदितादितिशब्दःअयथाविदितादित्यर्थेअयाथार्थ्येनज्ञातादित्यर्थेतथावाक्यांतरेअविदितादितिशब्दःअपूर्वविदितादित्यर्थे पूर्वमविज्ञातादित्यर्थेचप्रवृत्तःस्यात् ॥ तथाचभेदबुद्धिनिवृत्त्यभावेनफलस्यापिवैपरीत्यसंभावनास्यादितिस्पष्टमेव ॥ त्तस्मात्विदितादविदिताच्चपरंशुद्धं अन्यद्यदिसिद्धंस्यात्तदातत्संसिद्ध्यैसम्यक्फलसिद्धिजनकंनभवेदितिनिश्चितमित्यर्थः ॥ तस्माद्वस्तुतःकार्यकारणात्मकंसर्वंब्रह्मैवउपाधिभेदात्तुभेदव्यवहारः ॥ तेनभेदबुद्ध्यभावान्नफलहानिरिरितितत्त्वम् ॥ एतद्वाक्यंसामवेदीयतवल्कारोपनिषदिपठितंतच्चसत्यमेवंप्रत्यक्षादिभिःप्रमाणैर्नपरःप्रत्याययितुंशक्यः ॥ आगमेनतुशक्यतएवप्रत्याययितुंतदुपदेशार्थमागममाह ॥ अन्यदेवतद्विदितादथोअविदितादधीति ॥ अन्यदेवपृथगेवतद्यत्प्रकृतंश्रोत्रादीनांश्रोत्रादीत्युक्तमविषयंचतेपांतद्विदितादन्यदेवहिविदितंनामयद्विदिक्रियया आतिशयेनआप्तंतद्विदिक्रियाकर्मभूतंक्वचित्किंचित्कस्यचिद्विदितंस्यादितितस्मादितिसर्वमेवव्याकृतंतद्विदितमेवतत्तस्मादन्यदित्यर्थः ॥ अविदितमज्ञातंतर्हीतिप्राप्तआह ॥अथोअप्यविदिताद्विदितविपरीतादव्याकृतादविद्यालक्षणाव्याकृतबीजादधीत्युप

अस्मिन्वाक्येफलस्यापिवैपरीत्यविभावना ॥ यथास्यात्तद्वदेवात्रवक्ष्यामिश्रूयतांमुने ॥ ४८ ॥ अयथाविदिताच्छब्दो अपूर्वविदितादिति ॥ प्रवृत्तःस्यात्तद्विदितात्तथैवाविदितात्परं ॥ ४९ ॥ अन्यदेवहिसंसिद्ध्यैनभवेदितिनिश्चितं ॥ एपतआत्मांतर्यामीयोमृतश्चशिवःस्वयं ॥ ५० ॥ ॥ ॥ ॥ ॥

र्यर्थेलक्षणयाऽन्यदित्यर्थः ॥ यद्धियस्मादध्युपरिभवतितत्तस्मादन्यदितिप्रसिद्धम् ॥ यद्विदितंतदल्पंअत्यंतदुःखात्मकंचेतिहेयम् ॥ तस्माद्विदितादन्यद्ब्रह्मेत्युक्तेत्वहेयत्वमुक्तंस्यात्तथाअविदितादधीत्युक्तेऽनुपादेयत्वमुक्तंस्यात् ॥ कार्यार्थंहिकारणमन्यदन्येनोपादीयते ॥ अतश्चनवेदितुरन्यस्मैप्रयोजनायान्यदुपादेयं नभवतीत्येवंविदिताविदिताभ्यामन्यदितिहेयोपादेयप्रतिषेधेनस्वात्मनोऽन्यत्वात्ब्रह्मविषयाजिज्ञासाशिष्यस्यानिवर्तितास्यात् ॥ नह्यन्यस्यस्वात्मनोविदिताविदिताभ्यामन्यत्वंवस्तुनःसंभवतीत्यात्माब्रह्मेत्येपवाक्यार्थइतिव्याख्यातम् ॥ एषतआत्मेतिबृहदारण्यकवाक्यस्यार्थमाह ॥एपतइति ॥ एषतवांतर्यामीअंतरवस्थितोयमायिताआत्मापरमात्मायोअमृतःनित्यःसस्वयंशिवएवेत्यर्थः ॥ एतद्वाक्यमंतर्याम्यधिदैवादिषुतद्धर्मव्यपदेशादित्याधिकरणेयःपृथिव्यांतिष्ठन्नित्युपक्रम्यपृथिव्याअंतरोऽयंपृथिवीनवेदयस्यपृथिवीशरीरंयःपृथिवीमंतरोयमयत्येषतआत्मांऽतर्याम्यमृतइतिविषयवाक्यत्वेनोपन्यस्तंतत्रांतर्यामिशब्देनकिमधिदैवाद्यभिमानिदेवतादिकंग्राह्यमुतपरमात्मेतिसंशयेयोगादिबलेनाधिदैवाद्यभिमानिदेवतादिकंग्राह्यमितिपूर्वपक्षमुपन्यस्यअमृतत्वादिधर्मव्यपदेशात्परमात्मैवविवक्षितइतिसिद्धांतितंशारीरके ॥ ४९ ॥ ५० ॥ ॥ ॥ ॥ ॥ ॥ ॥

सयश्चायंपुरुषइतितैत्तिरीयब्रह्मवल्लिगतवाक्यानामर्थमाह ॥ यश्चेति ॥ पुरुषशब्देनबुभुत्सुर्मनुष्योपिविवक्षितः ॥ तत्रयआनंदमयःशंभुःयश्चादित्येआदित्य देहेऽव्यवस्थितःसचासौप्रत्यक्षोऽपिपरोक्षःसन्सप्रसिद्धएकएवईरितःतयोःपार्थक्यंपृथक्त्वंनेत्यर्थः ॥ सेतीत्यत्रसोचिलोपेचेदितिसुलोपः ॥५१॥ ननुसर्वाधिष्ठा नस्यशंभोःपरमात्मनःपुरुषादिकमधिष्ठानंनसंभवतीत्यतआह ॥ सोपाधिद्वयमिति ॥ पुरुषाधिष्ठितत्वादित्याधिष्ठितत्वरूपोपाधिद्वयसहितत्वमस्यवाक्यस्या र्थःउपचारादारोपात्तथाकथ्यतइत्यर्थः ॥ तत्रहेतुमाह ॥ तमिति ॥ तंशंभुनाथंशिवंश्रुतयःयएषोंतरादित्येहिरण्मयःपुरुषःनमोहिरण्यवाहवेहिरण्यवर्णायहिर ण्यरूपायहिरण्यपतयइत्याद्याःहिरण्मयंवदंतीत्यर्थः ॥ नहिनिर्गुणस्यशिवस्यवस्तुतोहिरण्मयत्वंसंभवतीतिभावः ॥ ५२ ॥ ननुहिरण्यवाहवइत्यनेनवाहुमा त्रस्यहिरण्मयत्वोक्त्याहिरण्यपतित्वंकथमतआह ॥ हिरण्येति ॥ तत्रव्यतिरेकेणहेतुमाह ॥ अन्यथेति ॥ यदिसर्वांगस्योपलक्षणंनभवेत्तदातत्पतित्वंहिरण्यप तित्वंउपचारादियत्नतोपिनसंभवेदितिहेतोरित्यर्थः ॥ अतएवहिरण्यवर्णायहिरण्यरूपायेत्युक्तमितितत्वं ॥ ५३ ॥ तदेवहिरण्मयत्वंछांदोग्यवाक्येनप्रतिपाद

यश्चायंपुरुषेशंभुर्यश्चादित्येऽव्यवस्थितः ॥ सचासौसेतिपार्थक्यंनैकएवसईरितः ॥ ५१ ॥सोपाधिद्वयमस्यार्थउपचा रात्तथोच्यते ॥ तंशंभुनाथंश्रुतयोवदंतिहिहिरण्मयं ॥ ५२ ॥ हिरण्यबाहवइतिसर्वांगस्योपलक्षणं ॥ अन्यथातत्प तित्वंतुनभवेदितियत्नतः॥५३॥यएषोंतरितिशंभुश्छांदोग्येश्रूयतेशिवः॥हिरण्यश्मश्रुवास्तद्वद्धिरण्मयकेशवान्॥५४॥

यति ॥ यएषइति ॥ यएषोंतरादित्योहिरण्मयःपुरुषोदृश्यतेसशंभुर्भक्तकल्याणकारीशिवएवेत्यर्थः ॥ इदंचयएषोंतरादित्येहिरण्मयःपुरुषोदृश्यतेहिरण्यश्मश्रुर्हि रण्यकेशआप्रणखात्सर्वएवसुवर्णइतिछांदोग्येश्रूयते ॥ तत्रभगवत्पादकृतंव्याख्यानमेवं ॥ अथयएषोंतरादित्येआदित्यस्यांतर्मध्येहिरण्मयोहिरण्यमयइवहिरण्म योनहिसुवर्णविकारत्वंदेवस्यसंभवति ॥ ऋक्सामगेष्णुत्वापहतपाप्मत्वासंभवात् ॥ नहिसौवर्णेऽचेतनेपाप्मादिप्राप्तिरस्तियेनप्रतिषिध्येत ॥ चाक्षुषेचाऽग्र हणात् ॥ अतोलुप्तोपमएवहिरण्मयशब्दोज्योतिर्मयइत्यर्थः ॥ उत्तरेष्वपिसमानायोजना ॥ पुरुषःपुरिशयनात्पूरयतीतिवास्वेनात्मनाजगदितिदृश्यतेनिवृत्त चक्षुर्भिःसमाहितचेतोभिर्ब्रह्मचर्यादिसाधनापेक्षैस्तेजस्विनोपिश्मश्रुकेशादयःकृष्णाःस्युरित्यतोविशिनष्टि ॥ हिरण्मयःश्मश्रुर्हिरण्यकेशइतिज्योतिर्मयान्येवा ऽस्यश्मश्रूणिकेशाश्चेत्यर्थः ॥ आप्रणखात्प्रणखोनखाग्रंनखाग्रेणसहसर्वःसुवर्णइवभारूपइत्यर्थइति ॥ ५४ ॥ ॥ ॥

अहमस्मिपरंब्रह्मेतिपूर्वोक्तस्योपनिषद्विशेषांगतवाक्यस्यतात्पर्यार्थमाह ॥ अहमस्मीति ॥ परंतुरीयंशिवात्मकंब्रह्माऽहमेवास्मीत्यर्थः ॥ परेति ॥ परंचअपरं चपरात्परंचेतिविग्रहः ॥ ५५ ॥ तत्राहंपदस्यार्थमाह ॥ शक्त्यात्मेति ॥ ५६ ॥ वाक्यार्थमाह ॥ सएवेति ॥ यःशक्त्यात्माशिवईरितःसएवाहमस्मीतिवाक्यार्थयोजनाभवतीत्यर्थः ॥ परब्रह्मपदार्थमाह ॥ सर्वोत्कृष्टइति ॥ ५७ ॥ परापरपरात्परपदार्थान्क्रमेणाह ॥ रुद्रइति ॥ श्रुत्यैवपूर्वोक्ताहमस्मीत्यादिकयैव ॥ ५८ ॥ तेभ्यःरुद्रादिभ्यःपरमःतुरीयःपरशब्देनबोधितःपरंब्रह्मेत्यत्रत्यपरशब्देनबोधितः ॥ वेदशास्त्रेतिपूर्वोक्तवाक्यस्यतात्पर्यार्थमाह ॥ वेदेति ॥ मूलवाक्येगुरुत्मेत्यार्षं ॥ वेदशास्त्रगुरवएवात्माब्रह्मयस्यइतितदर्थः ॥ ५९ ॥ स्वयमानंदलक्षणमित्युक्तंतस्यार्थमाह ॥ पूर्णानंदमयइति ॥ वेदादीनांवाक्याना

नखमारभ्यकेशाग्रात्सर्वत्रापिहिरण्मयः ॥ अहमस्मिपरंब्रह्मपरापरपरात्परं ॥ ५५ ॥ इतिवाक्यस्यतात्पर्यंवदामि श्रूयतामिदं ॥ अहंपदस्यार्थभूतःशक्त्यात्माशिवईरितः ॥ ५६ ॥ सएवास्मीतिवाक्यार्थयोजनाभवतिध्रुवं ॥ सर्वोत्कृष्टश्चसर्वात्मापरंब्रह्मत्वईरितः ॥ ५७ ॥ परश्चाथापरश्चेतिपरात्परमितित्रिधा ॥ रुद्रोब्रह्माचविष्णुश्चप्रोक्ताःश्रुत्यैवनान्यथा ॥ ५८ ॥ तेभ्यश्चपरमोदेवःपरशब्देनबोधितः ॥ वेदशास्त्रगुरूणांचवाक्याभ्यासवशाच्छिशोः ॥ ५९ ॥ पूर्णानंदमयःशंभुःप्रादुर्भूतोभवेद्धृदि ॥ सर्वभूतस्थितःशंभुःसएवाहंनसंशयः ॥ ६० ॥ तत्वजातस्यसर्वस्यप्राणोऽस्म्यहमहंशिवः ॥ इत्युक्त्वापुनरप्याहशिवस्तत्वत्रयस्यच ॥ ६१ ॥ प्राणोस्मीत्यत्रपृथ्व्यादिगुणांतग्रहणान्मुने ॥ आत्मतत्वानिसर्वाणिगृहीतानीतिभावय ॥ ६२ ॥ ॥ ॥ ॥

मभ्यासवशात्पूर्णानंदमयःशंभुःशिशोःशिष्यस्यहृदिप्रादुर्भूतोभवेदित्यन्वयः ॥ सर्वभूतस्थितमित्युक्तस्यार्थमाह ॥ सर्वेति ॥ सर्वभूतस्थमेकंनारायणमितिवाक्यंमहावाक्यरत्नावल्यांस्थितं ॥ ६० ॥ तत्वस्यप्राणइत्यादीनांपूर्वोक्तानांवाक्यानामर्थमाह ॥ तत्वजातस्येति ॥ महदादिसर्वतत्वानामित्यर्थः ॥ तत्वत्रयस्येति ॥ आत्मविद्याशिवाख्यतत्वत्रयस्यप्राणोस्मीत्यर्थप्रतिपादकेवाक्येपृथिव्यादिगुणांतग्रहणात्पृथिव्याःप्राणोहमस्मीत्यारभ्यत्रिगुणस्यप्राणोहमस्मीत्येवमुक्तत्वात्आत्मतत्वानिसर्वाणिगृहीतानिसंगृहीतानीतिभावयेत्यर्थः ॥ ६१ ॥ ६२ ॥ ॥ ॥ ॥

विद्याशिवतत्वयोःसंग्रहेप्रमाणमाह ॥ सर्वग्रहणमिति ॥ तत्वजातस्यसर्वस्येत्यधुनोक्तशिववाक्येतत्वजातस्येत्येवसिद्धेसर्वस्येत्युपादानंविद्याशिवतत्वयोःसं ग्रहार्थमितिशेषः ॥ तथाचआत्मविद्याशिवतत्वानांप्राणोहमस्मीतितात्पर्यार्थः ॥ सर्वोहमित्याद्युक्तंव्याचष्टे ॥ सर्वइति ॥ सर्वात्मकत्वात्सर्वपदार्थोहमित्यर्थः ॥ ६३ ॥ संसारीतियदुक्तंतदर्थमाह ॥ जीवस्येति ॥ जीवस्यजीवरूपेणानुप्रविष्टस्यात्मनोंऽतर्यामित्वात् अंतर्यमयितृत्वाज्जीवःसंसरणशीलोहमेवास्मीत्यर्थः ॥ यद्भूतमित्याद्युक्तंतदर्थमाह ॥ तस्येति ॥ तस्यजीवात्मनोयद्भूतमतीतंयच्चभव्यंवर्तमानंयच्चभविष्यत्तत्सर्वंमदात्मकत्वादहमेवसर्वइत्यर्थः ॥ अत्रभव्यप देनवर्तमानंग्राह्यं ॥ यद्भविष्यदितिभविष्यतःपृथगुक्तेः ॥ पूर्वोक्तमूलवाक्येतुभव्यपदेनभविष्यत्ग्राह्यं ॥ यद्वर्तमानमितिपृथगुक्तेरितिबोध्यं ॥ ६४ ॥ अ त्रसाक्षाच्छिवोदितांश्रुतिंप्रमाणयति ॥ सर्वइति ॥ सर्वोवैरुद्रस्तस्मैरुद्रायनमोअस्तु ॥ पुरुषोवैरुद्रःसन्महोनमोनमः ॥ विश्वंभूतंभुवनंचित्रंवहुधाजातंजायमा नंचयत् ॥ सर्वोह्येषरुद्रइतिश्रुतिराहेत्यर्थः ॥ सोक्तश्रुतिः ॥ ६५ ॥ सर्वात्मकत्वादद्वितीयोहमित्युक्तंतदर्थमाह ॥ परमैरिति ॥ परमैःसर्वोत्कृष्टैःसर्वतत्वमय

पुनश्चसर्वग्रहणंविद्यातत्वशिवात्मनोः ॥ तत्वयोश्चास्म्यहंप्राणःसर्वःसर्वात्मकोह्यहं ॥ ६३ ॥ जीवस्यचांतर्यामित्वाज्जी वोहंतस्यसर्वदा ॥ यद्भूतंयच्चभव्यंयद्भविष्यत्सर्वमेवच ॥ ६४ ॥ मन्मयत्वादहंसर्वःसर्वोवैरुद्रइत्यपि ॥ श्रुतिराहमुने साहिसाक्षाच्छिवमुखोद्गता ॥ ६५ ॥ सर्वात्मापरमैरेभिर्गुणैर्नित्यसमन्वयात् ॥ स्वस्मात्परात्मविरहादद्वितीयोहमे वहि ॥ ६६ ॥ सर्वंखल्विदंब्रह्मेतिवाक्यार्थःपूर्वमीरितः ॥ पूर्णोहंभावरूपत्वान्नित्यमुक्तोहमेवहि ॥ ६७ ॥

त्वांतर्यामित्वादिभिरेभिर्गुणैर्नित्यंसमनुगमात्सर्वात्मकत्वमस्येत्यर्थः ॥ अतएवाह ॥ स्वस्मादिति ॥ अद्वितीयःसजातीयविजातीयस्वगतभेदशून्योहमेवेत्यर्थः ॥ एवमेवाद्वितीयंब्रह्मेतिश्रुतेरितिभावः ॥ ६६ ॥ सर्वंखल्विदमितिछांदोग्यवाक्यमुक्तंतदर्थंदर्शयति ॥ सर्वमिति ॥ पूर्वमीरितःसर्वःसर्वात्मकोह्यहमित्यादिना पूर्वमुक्तः ॥ एतद्वाक्यंसर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीतेतिछांदोग्येश्रूयते ॥ तच्चसर्वंसमस्तंखल्वितिवाक्यालंकारार्थोनिपातः ॥ इदंजगन्नामरूप विकृतंप्रत्यक्षादिविषयंब्रह्मकारणंवृद्धतमत्वाद्ब्रह्मकथंसर्वस्यब्रह्मत्वमित्यतआह ॥ तज्जलानिति ॥ तस्माद्ब्रह्मणोजातंतेजोऽबन्नादिक्रमेणसर्वमतस्तज्जं ॥ तथा तेनैवजननक्रमेणप्रतिलोमतयातस्मिन्नेवब्रह्मणिलीयतेतदात्मतयाश्लिष्यतइतितल्लंतथातस्मिन्नेवस्थितिकालेनितिप्राणितिचेष्टतइतितदनमितियंब्रह्मात्मतया त्रिषुकालेष्वविशिष्टंतव्द्यतिरेकेणाग्रहणादतस्तदेवेदंजगदितिव्याख्यातंभाष्ये ॥ सर्वोहंविमुक्तोहमित्युक्तंतदर्थमाह ॥ पूर्णइति ॥ भावरूपत्वात्सर्वपदार्थरू पत्वात्पूर्णरूपोहमित्यर्थः ॥ ६७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रहेतुमाह॥पशवइति॥हियतःपशवोपिमत्प्रसादेनमद्भावंमत्स्वरूपमाश्रिताःसंतोमुक्ताभवंतीत्यर्थः॥योसौसोहमितियदुक्तंतदर्थमाह॥यइति॥योसौसर्वात्मकः शंभुःसोहमेवास्मीत्यर्थः ॥ हंसइति ॥ यश्चशक्त्यात्माप्रसिद्धःशिवःसोप्यहमेवास्मीत्यर्थः ॥ एतत्समानार्थकंवाक्यंयोसावसौपुरुषःसोहमस्मीतीशोपनिषदिप ठितंतच्चयोसावादित्यमंडलस्थोव्याहृत्यवयवपुरुषःपुरुषाकारत्वात्पूर्णमनेनप्राणबुद्ध्यात्मनाजगत्समस्तमितिपुरुषःपुरिशयनाद्वापुरुषःसोहमस्मिभवामीति व्याख्यातंभाष्यकारैः॥६८॥६९॥ तत्पुरतःशिष्यस्यपुरतःचतुरस्रेमंडले ॥७०॥७१॥तत्आपूरितंजलं॥यस्त्विति॥यस्तूपासकःअंतरंअंतर्गतंकिंचित्परस्परवैल क्षण्यंछिद्रंवास्तीतिकुरुतेमनुतेसभयभागित्यर्थः॥७२॥ आतःअतः॥७३॥षडुत्थेति॥षडध्वविध्युक्तमार्गेणेत्यर्थः॥७४॥शिरइति॥शिरोमुखहृदयगुह्यपादांतमि

पशवोमत्प्रसादेनमुक्तामद्भावमाश्रिताः ॥ योसौसर्वात्मकःशंभुःसोहंहंसःशिवोस्म्यहं ॥ ६८ ॥ इतीशश्रुतिवाक्या भ्यामुपदिष्टार्थमादरात् ॥ साक्षाच्छिवैक्यदंपुंसामुपदिश्यशिशोर्गुरुः ॥ ६९ ॥ आदायशंखंसाधारमस्त्रमंत्रेणभस्म ना ॥ शोध्यतत्पुरतःस्थाप्यचतुरस्रेसमर्चिते ॥ ७० ॥ ओमित्यभ्यर्च्यगंधाद्यैरस्त्रवस्त्रोपशोधितं ॥ वासितंजलमापू र्यसंपूज्योमितिमंत्रतः ॥ ७१ ॥ सप्तधैवाभिमंत्र्याथप्रणवेनपुनश्चतत् ॥ यस्त्वंतरंकिंचिदस्तिकुरुतेसतुभीतिभाक् ॥ ॥ ७२ ॥ इत्याहश्रुतिरातस्त्वंदृढात्मागतभीर्भव ॥ इत्याभाष्यस्वयंशिष्यंदेवंध्यायन्त्समर्चयेत् ॥ ७३ ॥ शिष्यासनं संप्रपूज्यषडुत्थासनमार्गतः ॥ शिवासनंचसंकल्प्यशिवमूर्तिंप्रकल्प्यच ॥ ७४ ॥ पंचब्रह्माणिविन्यस्यशिरःपादाव सानकं ॥ मुंडवक्त्रकलाभेदैःप्रणवस्यकलाअपि ॥ ७५ ॥ अष्टत्रिंशन्मंत्ररूपाःशिष्यदेहेथमस्तके ॥ समावाह्यशिवं शांतंस्थापनीयाःप्रदर्श्यच ॥ ७६ ॥ मुद्राश्चांगानिविन्यस्यसर्वज्ञानीत्यनुक्रमात् ॥ उपचारांश्चसंकल्प्यषोडशासनपू र्वकान् ॥ ७७ ॥ पायसान्नंचनैवेद्यंसमर्प्योमग्निजायया ॥ गंडूषाचमनार्घ्यादिधूपदीपांतिकंक्रमात् ॥ ७८ ॥ ना माष्टकेनसंपूज्यब्राह्मणैर्वेदपारगैः ॥ जपेद्ब्रह्मविदाप्नोतिभृगुर्वैवारुणिस्ततः ॥ ७९ ॥ ॥ ॥

त्यर्थः॥मुंडेति॥मूर्धमुखसंबंधिकलाभेदैःप्रणवस्याष्टत्रिंशन्मंत्ररूपाःकलाअपिशिष्यस्यदेहेविन्यस्याथतन्मस्तकेशिवंसमावाह्यताःकलाःस्थापनीयाइत्यन्वयः ॥७५॥७६॥ मुद्राइति॥प्रदर्श्येतिसंबध्यते॥अंगानिषडंगानि॥सर्वज्ञानीति॥सर्वज्ञानीत्यादयोमंत्राःशिवशास्त्रोक्ताः॥तदनुक्रमादासनपूर्वकान्षोडशोपचारान्सं कल्प्येतिसंबंधः ॥ ७७ ॥ समर्प्येति ॥ ओमग्निजायया ओंस्वाहेतिमंत्रेण ॥ ७८ ॥ नामाष्टकेनपूर्वोक्तेन॥ब्रह्मविदिति ॥ ब्रह्मविदाप्नोतिपरमित्यध्यायंभृ गुर्वैवारुणिरित्यध्यायंचजपेदित्यर्थः ॥ ७९ ॥ ॥ ॥ ॥ ॥

योदेवानामिति ॥ योदेवानांप्रथमंपुरस्तादित्यारभ्यतस्यप्रकृतिलीनस्यपरःसमहेश्वरइत्यंतंजपेदितिपूर्वेणान्वयः ॥ तस्यशिष्यस्य ॥ ८० ॥ आदायेति ॥ श्रीविरूपाक्षनिर्मितेशिवनिर्मितेपंचाशिकेपंचमुखस्वरूपप्रतिपादकेशास्त्रेस्थितंसिद्धाख्यस्कंधंख्यातिःपूर्णाहुमित्यंतंजपन्सन्मनोहरसुगंधाढ्यामागुल्फांतावलंविनींमालामादायकंठदेशेसमर्पयेदितिसंवंधः ॥८१॥८२॥ श्रीपादेति ॥ श्रीपादेतिसंज्ञकंस्वसंप्रदायानुरूपंतिलकंसर्वांगलेपनंचचंदनेनकुर्यादितिसं

योदेवानामुपक्रम्ययःपरःसमहेश्वरः ॥ इत्यंततस्यपुरतःकल्हारादिविनिर्मितां ॥ ८० ॥ आदायमालामुत्थायश्री विरूपाक्षनिर्मिते ॥ शास्त्रेपंचाशिकेरूपेसिध्दिस्कंधंजपञ्छनैः ॥ ८१ ॥ ख्यातिःपूर्णाहुमित्यंतंकंठदेशेसमर्पयेत् ॥ मनोहरसुगंधाढ्यामागुल्फांतावलंविनीं ॥ ८२ ॥ तिलकंचंदनेनाथसर्वांगालेपनंपुनः ॥ स्वसंप्रदायानुगुणंनामश्री पादसंज्ञितं ॥ ८३ ॥ छत्रंचपादुकांदद्याद्दूर्वाकल्पविकल्पनं ॥ व्याख्यातृत्वंचकर्मादिगुर्वासनपरिग्रहं ॥ ८४ ॥ अनुगृह्यगुरुस्तस्मैशिष्यायशिवरूपिणे ॥ शिवोहमस्मीतिसदासमाधिस्थोभवेतितं ॥ ८५ ॥ संप्रोच्याथस्वयंतस्मै नमस्कारंसमाचरेत् ॥ संप्रदायानुगुण्येननमस्कुर्युस्ततोपरे ॥ ८६ ॥ शिष्यस्तथासमुत्थायनमस्कुर्याद्गुरुंक्रमात् ॥ गुरोरपिगुरुंतस्यशिष्यांश्चस्वगुरोरपि ॥ ८७ ॥ एवंकृतनमस्कारंशिष्यंजस्वागुरुःस्वयं ॥ अद्यप्रभृतिलोकानामनु ग्रहपरोभव ॥ ८८ ॥ परीक्ष्यवत्सरंशिष्यमंगीकुरुविधानतः ॥ रागादिदोषान्संत्यज्यशिवध्यानपरोभव ॥ ८९ ॥ सत्संप्रदायसंसिद्धैःसंगंकुरुनचेतरैः ॥ अनभ्यर्च्यशिवंजातुमाभुंक्ष्वाप्राणसंक्षयं ॥ ९० ॥ गुरुभक्तिंसमास्थायसुखी भवसुखीभव ॥ इतिक्रमाद्गुरुवरःसमंशिष्यंसमाचरेत् ॥ ९१ ॥ योगपट्टप्रकारस्तेकथितोमुनिसत्तम ॥ इत्युक्त्वाषण्मु खस्तस्मैक्षौरस्नानविधिक्रमं ॥ ९२ ॥ ॥ ॥ ॥ ॥ ॥

बंधः ॥ ८३ ॥ दूर्वाकल्पविकल्पनंदूर्वाकल्पानांदूर्वारचनाप्रकाराणांविकल्पनंविशेषेणव्यवस्थापनंव्याख्यातृत्वंशिवमंत्रादीनांकर्मादौकर्मारंभेगुर्वासनपरिग्रहंचदद्यादितिसंवंधः ॥ ८४ ॥ तंशिष्यं ॥ ८५ ॥ ततोपरेगुरोरन्ये ॥ ८६ ॥ ८७ ॥ ८८ ॥ वत्सरंवत्सरपर्यंतं ॥ ८९ ॥ ९० ॥ संमस्वतुल्यं ॥ ९१ ॥ ९२ ॥

॥ ९३ ॥ क्षालनमिति ॥ वासोमृदंभोभिःक्षालनंकारयेत् ॥ कस्येत्यपेक्षायामाह ॥ क्षुरादिकमिति ॥ तद्धस्तौवप्तृहस्तौमृदालिप्यप्राक्स्थापितंतोयैःप्रोक्षितंचक्षुरादिकंक्षालयेत्युक्त्वामृदंददेदितिसंबंधः ॥ ९४ ॥ ततोयत्कर्तव्यंतदाह ॥ शिवमिति ॥ शिवंशिवमितीरयन्सन्हस्तद्वयसंबंध्यनामिकांगुष्ठाभ्यामभिमंत्रितेस्वनेत्रेपिहितेकृत्वाऽस्त्रेणाऽस्त्रमंत्रेणोन्मील्यक्षुरादिक्षौरसाधनंसंदृश्याऽस्त्रेणैवद्वादशवारमभिमंत्र्याऽस्त्रमंत्रतःप्रोक्षयेदितिसंबंधः ॥ ९५ ॥ ९६ ॥ तारेणप्रणवेन ॥ ९७ ॥ वस्त्रेति ॥ नद्यांसर्वमितिक्वचित्पाठः ॥ आदायेति ॥ पर्णमादायतत्रोप्तकेशान्संस्थाप्यपृथिव्यांनिक्षिपेत् ॥ नकेवलभुवःस्थलइत्यर्थः ॥

वकुमारभतेयेनशुद्धिःस्याद्यतिनःपरं ॥ गुरुंनत्वाविशेषेणलब्धानुज्ञस्ततोगुरोः ॥ ९३ ॥ शिरःसंक्षाल्यवाचम्यसवासाःक्षौरमाचरेत् ॥ क्षालनंकारयेद्वासोमृदंभोभिःक्षुरादिकं ॥ ९४ ॥ तद्धस्तौचमृदालिप्यक्षालयेतिमृदंददेत् ॥ स्थापितंप्रोक्षितंतोयैःशिवंशिवमितीरयन् ॥ ९५ ॥ स्वनेत्रेपिहितेचैवानामांगुष्ठाभिमंत्रिते ॥ अस्त्रेणोन्मील्यसंदृश्यक्षुरादिक्षौरसाधनं ॥ ९६ ॥ अभिमंत्र्यद्वादशाथप्रोक्षयेदस्त्रमंत्रतः ॥ क्षुरंगृहीत्वातारेणदक्षभागेनिकृंतयेत् ॥ ९७ ॥ केशांश्चकांश्चिदग्रेपुवस्त्वासवैचवापयेत् ॥ पृथिव्यांपर्णमादायविक्षिपेन्नभुवस्थले ॥ ९८ ॥ श्मश्रूणिहस्तपादस्थनखानिचनिकृंतयेत् ॥ बिल्वाश्वत्थतुलस्यादिस्थानेसंगृह्यमृत्तिकां ॥ ९९ ॥ द्विषड्वारंनिमज्याप्सुतीरंगत्वोपविश्यच ॥ शुद्धदेशेतुसंस्थाप्यमृदंत्रेधाविभज्यव ॥ १०० ॥ एकांपुनस्त्रिधाकृत्वाप्रोक्ष्यास्त्रेणाभिमंत्र्यच ॥ तत्रैकांमृदमादायदापयित्वान्यपाणिना ॥ १ ॥ करौद्वादशधालिप्यप्रत्येकंक्षाल्यवारिणा ॥ पुनरेकांपादयोश्चमुखेचान्यांकरक्रमात् ॥ ॥ २ ॥ लेप्यसंक्ष्याल्यचांभोभिःपुनश्चजलमाविशेत् ॥ अन्यांमृदंभागयित्वाशिरसिद्वादशक्रमात् ॥ ३ ॥ आलिप्यमृदमास्यांतंनिमज्यचपुनःपुनः ॥ तीरंगत्वातुगंडूषंषोडशाचमनंद्विधा ॥ ४ ॥ प्राणानायम्यचपुनःप्रणवाद्यष्टसंख्यया ॥ मृदमन्यांपुनस्त्रेधाविभजेच्चतदेकया ॥ ५ ॥ कटिशौचंपादशौचंविधायाचम्यचद्विधा ॥ प्रणवेनाथषोढाचप्राणानायम्यवाग्यतः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

॥ ९८ ॥ बिल्वेति ॥ बिल्वादिवृक्षाणांमूलस्थानेस्थितांमृत्तिकांसंगृह्यद्विषड्वारंद्वादशवारमप्सुनिमज्यतीरंगत्वेत्येवमग्रेपिसंबंधोवेदितव्यः ॥ ९९ ॥ ॥ १०० ॥ दापयित्वेति ॥ दापयित्वाखंडयित्वाऽन्यस्यपाणिनाकरौद्वादशधालिप्यप्रत्येकंवारिणाक्षाल्येतिसंबंधः ॥ १०१ ॥ अन्यांतृतीयां ॥ १०२ ॥ अन्यांप्रथमतोविभक्तांद्वितीयां ॥ १०३ ॥ आस्यांतंमुखपर्यंतं ॥ १०४ ॥ प्रणवादीति ॥ प्रणवपूर्वंकंयथातथाऽष्टसंख्ययाप्राणानायम्येत्यर्थः ॥ मृदमन्यांप्रथमतोविभक्तांतृतीयां ॥ तदेकयातत्रत्यैकया ॥ १०५ ॥ १०६ ॥ ॥ ॥ ॥

अन्यामिति ॥ अन्यांतत्त्वामेवद्वितीयांस्वोरुदेशेत्रिधाविन्यस्याविभज्यस्थापयित्वाप्रणवेनप्रोक्ष्यतेनैवसप्तवारमभिमंत्रयेदित्यर्थः ॥ एकयेति ॥ अधुनाविन्यस्तयाप्रथमयामृदास्वपाण्योस्तलंत्रिधालिप्येत्याग्रिमेणसंबंधः ॥ १०७ ॥ संदृश्येति ॥ सूर्यंदर्शयित्वेत्यर्थः ॥ व्यत्यस्ताभ्यामिति ॥ दक्षिणपाणिनासव्यकक्षेसव्यपाणिनादक्षिणकक्षेचयथाभवेत्तथासमालिप्येत्यर्थः ॥ अन्यया ऽधुनाविन्यस्ताद्वितीयया ॥ १०८ ॥ अन्यांअधुनाविन्यस्तत्वृतीयां ॥ १०९ ॥ पंचांगेनशिरआद्यंगपंचकेनपुनरेकवारंप्रणमेदितिसंबध्यते ॥ ११० ॥ १११ ॥ अवशिष्टांस्कंधस्थापितावशिष्टां ॥ ११२ ॥ अन्ययाप्रथमविभक्ततृतीयभागरूपयामृदा ॥ ११३ ॥ ११४ ॥ ११५ ॥ पंचधेति॥पूर्वोक्तपंचावरणप्रकारैःकल्पितेमंडले ॥ ११६ ॥ ११७ ॥ इतिश्रीशिवमहापुराणेकैलाससंहिता

पुनरन्यांस्वोरुदेशेत्रिधाविन्यस्यचोमिति ॥ प्रोक्ष्याभिमंत्रयेत्सप्तस्वपाण्योस्तलमेकया ॥ ७ ॥ त्रिधालिप्याथसंदृश्यसूर्यमूर्तेःस्वकक्षयोः ॥ समालिप्यचपाणिभ्यांव्यत्यस्ताभ्यामथान्यया ॥ ८ ॥ शिरआरभ्यपादांतंविलिप्यादित्यदृष्टया ॥ गृहित्वान्यांसमुत्थायदंडमादायभूतले ॥ ९ ॥ गुरून्शिवंचसंस्मृत्यसाष्टांगंप्रणमेत्त्रयं ॥ पंचांगेनैकवारंचसमुत्थायचवंदयेत् ॥ ११० ॥ तीर्थंप्रविश्यतन्मध्येनिमज्योन्मज्यतांमृदं ॥ स्कंधेसंस्थाप्यपूर्वोक्तप्रकारेणविलिप्यच ॥ ११ ॥ तत्रावशिष्टांसंगृह्यजलमध्येविलोल्यच ॥ त्रिवारमोमितिस्नात्वाशिवपादांबुजंस्मरन् ॥ १२ ॥ अथाभिषिच्यशंखाख्यमुद्रयाद्वादशोमिति ॥ तीरमागत्यसंशोध्यकरौपादौमृदान्यया ॥ १३ ॥ पुनश्चसंशोध्यकरौद्विराचम्योमितिस्मरन् ॥ अभिषिच्योमितिजलंविरजाभस्मलोलितं ॥ १४ ॥ अंगोपमार्जनंकृत्वासुस्नातोभस्मनाततः ॥ त्रिपुंड्रंचविधायाथकृतमाध्यंदिनक्रियः ॥ १५ ॥ गुरुंतीर्थंचसंवंद्यनमस्कृत्यमहेश्वरं ॥ संपूज्यपरमेशानंपंचधापरिकल्पिते ॥ १६ ॥ भैक्षंयथोचितंकुर्याद्दूषितान्नंविवर्जयेत् ॥ क्षौरस्नानविधिःप्रोक्तःकिंभूयःश्रोतुमिच्छसि ॥ ११७ ॥ इति श्रीशिवमहापुराणेकैलाससं॰मुत्तरभागेएकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ श्रीवामदेवउवाच ॥ येमुक्तायतयस्तेषांदाहकर्मनविद्यते ॥ खननंखलुतेषांतत्कर्माचक्ष्वगुरोमम ॥ १ ॥ ॥ ॥

टीकायांसार॰मुत्तरभागेएकादशोऽध्यायः ॥ ११ ॥ ओंनमःशिवाय ॥ यतीनांशैवानांखननमुदितंसंस्थितवतांततःपूजाश्राद्धप्रभृतिनिखिलंकर्मकथितं ॥ षडास्येनाथासौमुनिवरयुतःशंकरसुतःप्रतस्थेकैलासंमुनिरपिपरानंदमगमत् ॥ १ ॥ इत्थंसूतमुखाच्छिवामृतरसंपीत्वातिहृष्टास्तदासंजातामुनयःशिवैकमनसस्तेनैमिषीयाःपुनः ॥ श्रीमत्सूतमपूजयन्सुकृतिनोनानोपचारैश्चतान्सूतोप्येवमनंदयद्बहुमुदेत्येतत्स्थितंद्वादशे ॥ २ ॥ नविद्यतइति ॥ स्मृत्यर्थसारेपि ॥ सर्वसंगनिवृत्तस्यध्यानयोगरतस्यच ॥ नतस्यदहनंकार्यंनाशौचंनोदकक्रियेत्युक्तं ॥ खननंशुद्धभूम्यंतर्भागेवस्थापनं ॥ १ ॥ ॥ ॥

नकेवलंमुक्तमात्राणामयंविधिरपितुविदेहकैवल्यंप्राप्तानामेवेत्याशयेनाह ॥ पूर्णाहमिति ॥ येपूर्णाहंभावंसर्वात्मनापरमेश्वरतादात्म्यमाश्रित्यदेहपंजरान्मुक्ता स्तेषामेवयत्स्वननकर्मतदाचक्ष्वेतिपूर्वेणसंबंधः ॥ पदंमहास्थानं ॥ २ ॥ ३ ॥ ऋभुणाशिवयोगिविशेषेणमुनिना ॥ ईश्वरात्साक्षाच्छिवात् ॥ ४ ॥ ५ ॥ यस्मैदे यंतल्लक्षणमाह ॥ समाधिस्थइति ॥ देहभुगित्यत्रदेहभागितिपाठांतरं ॥ ६ ॥ योगमभ्यस्यतोपिप्रतिबंधकवशात्तदलाभेतस्यानुग्रहप्राप्त्युपायमाह ॥ अधैर्येति ॥ यःकश्चिद्योगमारुरुक्षुः ॥ त्रिपदार्थेति ॥ ज्ञानज्ञेयज्ञातृलक्षणत्रिपुटीपदार्थपरिज्ञानमित्यर्थः ॥ ७ ॥ ८ ॥ उक्तसाधनसंपन्नोपिशरीराशक्तिवशाद्यद्यधैर्यस्तनुंत्य जेत्म्रियेततन्मोक्षसाधनंवदामीतिशेषः ॥ तदेवाह ॥ सदाशिवानुग्रहतइति ॥ ९ ॥ आतिवाहिकरूपिण्यइति ॥ प्राणोत्क्रांत्यनंतरंसंपिंडितकरणग्रामान्सु

पूर्णाहंभावमाश्रित्ययेमुक्तादेहपंजरात् ॥ येतूपासनमार्गेणदेहमुक्ताःपदंगताः ॥ २ ॥ तेषांगतिविशेषंचभगवन्वक्तु मर्हसि ॥ सूतउवाच ॥ मुनिविज्ञप्तिमाकर्ण्यशक्तिपाणिःसुरारिहा ॥ ३ ॥ प्राहाऽत्यंतरहस्यंचऋभुणाश्रुतमीश्वरात् ॥ श्रीसुब्रह्मण्यउवाच ॥ इदमेवमुनेगुह्यमृभवेशिवयोगिने ॥ ४ ॥ उक्तंभगवतासाक्षात्सर्वज्ञेनपिनाकिना ॥ वक्ष्येतद द्यतेब्रह्मन्नदेयंयस्यकस्यचित् ॥ ५ ॥ समाधिस्थोयतिःकश्चिच्छिवभावेनदेहभुक् ॥ अस्तिचेत्समहाधीरःपरिपूर्णः शिवोभवेत् ॥ ६ ॥ अधैर्यचित्तोयःकश्चित्समाधिंनचविंदति ॥ त्रिपदार्थपरिज्ञानंवेदांतागमवाक्यजम् ॥ ७ ॥ श्रु त्वागुरुमुखाद्योगंसमभ्यस्ययमादिकम् ॥ शिवध्यानपरोनित्यंप्रणवासक्तमानसः ॥ ८ ॥ देहदौर्बल्यवशतोयद्यधैर्य स्तनुंत्यजेत् ॥ सदाशिवानुग्रहतोनंदिनाप्रेरितामुने ॥ ९ ॥ आतिवाहिकरूपिण्योदेवताःपंचविश्रुताः ॥ अग्न्यहंता कृतःकाश्चिज्ज्योतिःपुंजवपुष्मती ॥ १० ॥ अन्होभिमानिनीकाचिच्छुक्लपक्षाभिमानिनी ॥ उत्तरायणरूपाचपंचानुग्र हतत्पराः ॥ ११ ॥ धूमातमस्विनीरात्रिःकृष्णपक्षाभिमानिनी ॥ दक्षिणायनरूपाचकर्मानुष्ठानतत्परान् ॥ १२ ॥ गृ हीत्वात्रिदिवंयांतितेतुपुण्यक्षयेपुनः ॥ मानुषंलोकमासाद्यभजंतेजन्मपूर्ववत् ॥ १३ ॥

कृतिनोजीवानर्चिरादिमार्गेणपरलोकम तिवाहयंतिप्रापयंतिताआतिवाहिकरूपिण्यःताश्चार्चिराद्यभिमानिन्योदेवताःसंति ॥ स्पष्टंचैतदुत्तरमीमांसायांचतुर्थाध्यायेतृतीयपादेअर्चिराद्यधिकरणे ॥ अ ग्न्यहंताकृतःअग्न्यभिमानिन्यः ॥ ज्योतिःपुंजवपुष्मतीतेजोमात्राभिमानिनी ॥ १० ॥ उत्तरायणरूपाउत्तरायणाभिमानिनी ॥ अनुग्रहतत्पराःआतिवाहिक त्वेनसुकृत्यनुग्रहोत्सुकाः ॥ भगवद्गीतायामप्येवमुक्तं ॥ यत्रकालेत्वनावृत्तिमावृत्तिंचैवयोगिनः ॥ प्रयातायांतितंकालंवक्ष्यामिभरतर्षभ ॥ अग्निर्ज्योतिरहःशुक्लः षण्मासाउत्तरायणं ॥ तत्रप्रयातागच्छंतिब्रह्मब्रह्मविदोजनाः ॥ धूमोरात्रिस्तथाकृष्णःषण्मासादक्षिणायनं ॥ तत्रचांद्रमसंज्योतिर्योगीप्राप्यनिवर्तते ॥ शुक्लकृ ष्णेगतीह्येतेजगतःशाश्वतेमते ॥ एकयायात्यनावृत्तिमन्ययावर्ततेपुनरिति ॥ ११ ॥ १२ ॥ मानुषमिति ॥ क्षीणेपुण्येमर्त्यलोकंविशंतीत्याद्युक्तेरितिभावः ॥ १३ ॥

ताःपूर्वोक्तदेवताः ॥ अग्न्यादिक्रमतइति ॥ आदिनाज्योतिःपुंजवपुष्मत्यादिलोकपरिग्रहः ॥ १४ ॥ निनीयनीत्वा ॥ देवदेवस्यशिवस्य ॥ १५ ॥ १६॥ ॥ १७ ॥ १८ ॥ शाखादिशाप्रकारइतियावत्॥भोगादविरक्तस्यानुग्रहार्थंप्राप्तंविमानांतरंविशिनष्टि ॥ रुद्रकन्येति ॥ १९ ॥ २० ॥ २१ ॥तस्यापीति॥ अविरक्तस्यापीत्यर्थः॥प्रकृत्यादीति ॥ प्रकृत्यादिभिःमूलप्रकृतिमहदादितत्वैःकृत्वातिदुर्गमंकांतारंसंसृतिरूपमितिसंबंधः ॥२२॥२३॥ इतिनिश्चलमिति ॥

ताःपुनःपंचधामार्गैविभज्यारभ्यभूतलम् ॥ अग्न्यादिक्रमतोगृह्यसदाशिवपदंयतिम् ॥ १४ ॥ निनीयवंद्यचरणौदेवदेवस्यपृष्ठतः ॥ तिष्ठंत्यनुग्रहाकारकर्मण्येवप्रयोजिताः ॥ १५ ॥ समागतमभिप्रेक्ष्यदेवदेवःसदाशिवः ॥ विरक्तश्चेन्महामंत्रतात्पर्यमुपदिश्यच ॥ १६ ॥ मृगटंकत्रिशूलाग्र्यवरदानविभूषितम् ॥ त्रिनेत्रंचंद्रशकलगंगोल्लासिजटाधरम् ॥ १७ ॥ स्वसाम्यंचवपुर्दत्वागाणपत्येभिषिच्यच ॥ अनुगृह्यविमानाग्र्यंसर्वांगंसर्वकामदम् ॥ १८ ॥ इतिशाखाविरक्तस्यरुद्रकन्यासमावृतम् ॥ नृत्यगीतमृदंगादिवाद्यघोषमनोहरम् ॥ १९ ॥ दिव्यांबरस्रगालेपभूषणैरभिभूषितम् ॥ दिव्यामृतघटैःपूर्णंदिव्यपर्यंकपूरितम् ॥ २० ॥ सूर्यकोटिप्रतीकाशंचंद्रकोटिसुशीतलम् ॥ मनोवेगंसर्वगंचविमानमनुगृह्यच ॥ २१ ॥ भुक्तभोगस्यतस्यापिभोगकौतूहलक्षये ॥ निपात्यशक्तिंतीव्रतरांप्रकृत्याद्यतिदुर्गमं ॥२२॥ कांतारंदग्धुकामानांप्रलयानलसप्रभाम् ॥ अनुगृह्यमहामंत्रतात्पर्यंपरमेश्वरः ॥ २३ ॥ पूर्णाहंभावनारूपःशंभुरस्मीतिनिश्चलम् ॥ अनुगृह्यसमाधिंचस्वदास्यस्पंदरूपिणीः ॥ २४ ॥ रव्यादिकर्मसामर्थ्यरूपाःसिद्धीरनर्गलाः ॥ आयुःक्षयेपद्मयोनेःपुनरावृत्तिवर्जिताम् ॥ २५ ॥ मुक्तिंचपरमांतस्मैप्रयच्छतिजगद्गुरुः ॥ एतदेवपदंतस्मात्सर्वैश्वर्यसमन्वितम् ॥ २६ ॥ मुक्तिघंटापथंचेतिवेदांतानांविनिश्चयः ॥ मुमूर्षोस्तत्रमंदस्ययतेःसत्संप्रदायिनः ॥ ॥ २७ ॥ यतयःपरितःस्थित्वाप्रणवादीन्यनुक्रमात् ॥ उपदिश्यचवाक्यानितात्पर्यंचसमाहिताः ॥ २८ ॥ वर्णयेयुर्यतेस्तस्यप्राणस्यविलयावधि ॥ एतेषांसममेवात्रसंस्कारक्रमउच्यते ॥ २९ ॥ ॥ ॥

इत्याकारकनिश्चलंसमाधिमनुगृह्येतिसंबंधः ॥ २४ ॥ रव्यादीति॥रव्यादीनांसूर्यादीनांजगत्प्रकाशनादिशक्तिरूपाःसिद्धीश्चानुगृह्येतिसंबध्यते॥पद्मयोनेःचतुराननस्य ॥२५॥ जगद्गुरुःशिवः ॥२६॥ मुक्तिघंटापथंमुक्तिमार्गरूपं ॥ अस्ययतेःप्राणोत्क्रांतिसमयेयत्कर्तव्यंतदाह॥ मुमूर्षोरिति॥मंदस्यशिथिलकरणस्य ॥२७॥ वाक्यानिपूर्वोक्तानिप्रज्ञानंब्रह्मेत्यादीनितात्पर्यंपूर्वोक्ततद्वाक्याभिप्रायं ॥२८॥ एतेषांसंस्थितयतीनां ॥ सममेवअनुरूपमेव ॥ २९ ॥

उक्तलक्षणानांयतीनांसंस्काराभावेपिसद्गतिर्भवत्येवपरंतुतद्देशीयराजादीनामनर्थोभवेदित्याह ॥ असंस्कृतइतिद्वाभ्यां ॥ तत्रहेतुमाह ॥ सन्यस्येति ॥ शिवाश्रयपराःउक्तायतयइतिशेषः ॥ ३० ॥ तेषांअसंस्कृतशरीराणांदेहंदूषयतोराज्ञोराष्ट्रंनश्यतीत्यन्वयः ॥ ३१ ॥ नमइति ॥ नमइरिण्यायचेत्यनुवाकंसमारभ्यनमआमीवत्केभ्यइत्यंतंजपन्नेतज्जपांतेओमितिचजपन्देवयजनंदेवात्मकयत्यर्थंकृतंगर्तंशुद्धमृदादिभिःपूरयेदित्यर्थः ॥ ३२ ॥ अभ्यज्यसंस्थितयतिमभ्यक्तंकृत्वेत्यर्थः ॥ ३३ ॥ रुद्रसूक्तेनपरिणोरुद्रस्यहेतिरितिषडृचात्मकेन ॥ ३४ ॥ कौपीनादीनिपूर्वधृतानि ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ पंचब्रह्ममयेईशानादिपंचब्रह्मात्मके ॥ ३९ ॥ तमिति ॥ तंरथंपंचभिरोमाद्यैःप्रणवाद्यैर्ब्रह्ममंत्रैःसद्यादिभिःसंपूज्यक्रमात्संपादितैर्माल्यैरलंकृत्येतिसंबंधः ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ तांतनुंसंस्थितयतिशरीरं ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥

असंस्कृतशरीराणांदौर्गत्यंनैवजायते ॥ सन्यस्यसर्वकर्माणिशिवाश्रयपरायतः ॥ ३० ॥ देहंदूषयतस्तेषांराज्ञोराष्ट्रंचनश्यति ॥ तद्ग्रामवासिनस्तेपिभवेयुर्भृशदुःखिनः ॥ ३१ ॥ तद्दोषपरिहारायनमइरिण्यायचेतिसमारभ्यांतंजपन् ॥ ओमित्यंतेजपन्देवयजनंपूरयेत्ततः ॥ ३२ ॥ पुत्रादयोयथान्यायंकुर्युःसंस्कारमुत्तमं ॥ अभ्यज्यस्थाप्यशुद्धोदैरभ्यर्च्यकुसुमादिभिः ॥ ३३ ॥ श्रीरुद्रचमकाभ्यांचरुद्रसूक्तेनचक्रमात् ॥ शंखंचपुरतःस्थाप्यतज्जलेनाभिषिच्यच ॥ ॥ ३४ ॥ पुष्पंनिधायशिरसिप्रणवेनप्रमृज्यच ॥ कौपीनादीनिसंत्यज्यपुनरन्यानिधार्यच ॥ ३५ ॥ भस्मनोत्धूल्यसर्वांगंतदुक्तविधिनाततः ॥ त्रिपुंड्रंचविधानेनतिलकंचंदनेनच ॥ ३६ ॥ विरच्यपुष्पैर्मालाभिरलंकृत्यकलेवरम् ॥ उरःकंठशिरोबाहुप्रकोष्ठश्रुतिषुक्रमात् ॥ ३७ ॥ रुद्राक्षमालाभरणैरलंकृत्यचमंत्रतः ॥ धूपितंसमनुत्थाप्यशिक्योपरिनिधायच ॥ ३८ ॥ पंचब्रह्ममयेस्थाप्यरथेसंपूज्यतंरथम् ॥ ओमाद्यैःपंचभिर्ब्रह्ममंत्रैःसंपादितैःक्रमात् ॥ ३९ ॥ सुगंधिकुसुमैर्माल्यैरलंकृत्यसमंततः ॥ नृत्यवाद्यैर्ब्राह्मणानांवेदघोषैश्चसर्वतः ॥ ४० ॥ ग्रामंप्रदक्षिणीकृत्यग्रामप्राच्यामथापिवा ॥ उदीच्यांपुण्यदेशेतुपुण्यवृक्षसमीपतः ॥ ४१ ॥ खनित्वादेवयजनंदंडमात्रप्रमाणतः ॥ प्रणवव्याहृतिभ्यांचप्रोक्ष्यचास्तीर्यचक्रमात् ॥ ४२ ॥ शमीपत्रैश्चसकुशैरुत्तराग्रांस्तदूर्ध्वतः ॥ आस्तीर्यदर्भांस्तत्पीठंचैलाजिनकुशोत्तरम् ॥ ४३ ॥ प्रणवेनब्रह्मभिश्चपंचगव्येनतांतनुम् ॥ प्रोक्ष्याभिषिच्यरौद्रेणसूक्तेनप्रणवेनच ॥ ४४ ॥

समुद्धृत्ययतिमुत्थाप्य ॥ ४५ ॥ ४६ ॥ विष्णोइति ॥ विष्णोहव्यंरक्षस्वेतिवदन्गर्तेयतिंसंस्थाप्यगंधादिभिरलंकृत्यगुग्गुलुनाधूपंददेदितिसंबंधः ॥ ४७ ॥ प्रजापतेनेति ॥ अनेनमंत्रेणसोदकंकमंडलुंवामहस्तेदद्यादित्यन्वयः ॥ ४८ ॥ ४९ ॥ पंचभिर्ब्रह्मभिर्मंत्रैःस्थलमवटंस्पृष्ट्वाजपेदितिसंबंधः॥ ५० ॥ ५१॥ ॥५२॥चतुरस्रमिति ॥ चतुरस्रंपीठमितिसंबंधः ॥५३॥ तन्मध्येपीठमध्येमहादेवंगंधादिभिरर्चयेदितिसंबंधः ॥५४॥५५॥५६॥५७॥ उत्तराशास्यःउदङ्

शंखतोयेनाभिषिच्यमूर्ध्निपुष्पंविनिक्षिपेत् ॥ ओमित्यथसमुत्धृत्यस्वस्तिवाचनपूर्वकम् ॥ ४५ ॥ गर्तेयोगासनेस्था प्यप्राङ्मुखंस्थाप्यथातथा ॥ गंधपुष्पैरलंकृत्यधूपंगुग्गुलुनाततः ॥ ४६ ॥ विष्णोहव्यमितिप्रोच्यरक्षस्वेतिवदन् ददेत् ॥ दंडंदक्षिणहस्तेतुवामेदद्यात्कमंडलुम् ॥ ४७॥ प्रजापतेनत्वदेतान्यन्यमंत्रेणसोदकम् ॥ ब्रह्मजज्ञानंप्रथम मितिमंत्रेणमस्तके ॥ ४८ ॥ स्पृशन्जप्त्वारुद्रसूक्तंभ्रुवोर्मध्येस्पृशन्जपेत् ॥ मानोमहांतमित्यादिचतुर्भिर्मस्तकंत तः ॥ ४९ ॥ नालिकेरेणनिर्भिद्यावटंपूरयेत्ततः ॥ ब्रह्मभिःपंचभिःस्पृष्ट्वाजपेत्स्थलमनन्यधीः ॥ ५० ॥ योदेवाना मुपक्रम्ययःपरःसमहेश्वरः ॥ इतिजप्त्वामहादेवंसंसारभेषजंशिवम् ॥५१ ॥ सर्वज्ञमपराधीनंसर्वानुग्राहकंपरम् ॥ एकारत्निसमुत्सेधमरत्निद्वयविस्तृतम् ॥ ५२ ॥ मृदापीठंप्रकल्प्याथगोमयेनोपलेपयेत् ॥ चतुरस्रंचतन्मध्येगंधा क्षतसमन्वितैः ॥ ५३ ॥ सुगंधिकुसुमैर्बिल्वैस्तुलस्याचसमर्चयेत् ॥ प्रणवेनततोदत्वाधूपदीपौपयोहविः ॥५४॥ द त्वाप्रदक्षिणीकृत्यनमस्कृत्यचपंचधा ॥ प्रणवंद्वादशावृत्त्यासंजप्यप्रणमेत्ततः ॥५५॥ दिग्विदिक्क्रमतोदद्याद्ब्रह्मार्घ्यं प्रणवेनच ॥ एवंदशाहपर्यंतंविधिरेकादशेहनि ॥ ५६ ॥ संमार्ज्यवेदिमालिप्यकृत्वापुण्याहवाचनम् ॥ प्रोक्ष्यपश्चि ममारभ्यपूर्वांतंपंचचक्रमात् ॥ ५७ ॥ मंडलान्युत्तराशास्यःकुर्यात्स्वयमवस्थितः ॥ प्रादेशमात्रंसंकल्प्यचतुरस्रंचम ध्यतः ॥ ५८ ॥ बिंदुत्रिकोणषट्कोणवृत्ताकाराणिचक्रमात् ॥ शंखंचपुरतःस्थाप्यपूजोक्तक्रममार्गतः ॥ ५९ ॥ प्रा णानायम्यसंकल्प्यपूजयिष्येसुरेश्वरीः ॥ देवताःपंचपूर्वोक्ताआतिवाहिकरूपिणीः ॥ ६० ॥ ॥

मुखः॥मंडलानीति॥वेद्यांपश्चिममारभ्यपूर्वांतंपंचमंडलान्युदङ्मुखःकुर्यादितिसंबंधः ॥ मंडलकरणप्रकारमाह ॥ प्रादेशमात्रमिति ॥ मध्यतःमध्यभागेप्रादे शमात्रंसम्यक्कल्पयित्वाचतुरस्रंकुर्यादित्यर्थः॥५८॥अन्यानिचत्वारिकथंकर्तव्यानीतितदाह॥बिंद्विति ॥ बिंद्वाकारमित्यर्थः ॥ अन्यानिस्पष्टान्येव॥५९॥६०॥

॥ ६१ ॥ ६२ ॥ ६३ चंद्रोपलप्रभाःचंद्रकांतमणितुल्यकांतयः ॥ ६४ ॥ रक्तेति ॥ रक्तानिमाणिक्यादिरत्नमयत्वेनरक्तवर्णानियान्यंगुलीयकानिअंगुलिभूषणानितच्छाययातत्कांत्यारंजितानिदिङ्मुखानियाभिस्ताः ॥ यद्वारक्तवर्णायांगुलिगताकांतिस्तयारंजितानिदिङ्मुखानियाभिस्ताः ॥ ६५ ॥ ६६ ॥ कुंडलेति ॥ कुंडलैःकर्णभूषणैरामृष्टाभूषितागंडाःकपोलायासांताः ॥ ६७ ॥ तनुमध्याःकृशोदर्यः ॥ ६८ ॥ पादांगुलीयकेति ॥ पादांगुलीयकश्रेणीभिर्मंजुलारम्याअतएवातिमनोहराःसंतिताःसर्वाध्यात्वेतिव्यवहितेनोत्तरेणसंबंधः ॥ ननुप्राणिनामनुग्रहार्थंकिमितीमाःसृष्टाःशिवएवसाक्षात्कुतोनानुगृण्हातीत्यतआह

संत्यज्योत्तरतोदर्भानपश्चसंस्पृशेत्ततः ॥ पश्चिमादिसमारभ्यषडुत्थासनमार्गतः ॥ ६१ ॥ मंडलानिचतेष्वंतःपुष्पाण्याधायपीठवत् ॥ ॐ ऱ्हीमित्युच्चार्याग्निरूपामातिवाहिकदेवताम् ॥६२॥ आवाहयामिनमइत्यंतंसर्वत्रभावयेत्॥ स्थापनाद्यास्तुसंदर्श्यमुद्राःप्रत्येकमादरात् ॥ ६३ ॥ ऱ्हां ऱ्हीमित्यादिनाकुर्यादासामंगानिचक्रमात् ॥ पाशांकुशाभयाभीष्टपाणिचंद्रोपलप्रभाः ॥६४॥ रक्तांगुलीयकच्छायारंजिताखिलदिङ्मुखाः ॥ रक्तांबराधरकरपदपंकजशोभिताः ॥ ६५ ॥ त्रिनेत्रोल्लासिवदनपूर्णचंद्रमनोहराः ॥ माणिक्यमुकुटोद्भासिचंद्रलेखावतंसिनीः ॥६६॥ कुंडलामृष्टगंडाश्चपीनोन्नतपयोधराः ॥ हारकेयूरकटककांचीदाममनोहराः ॥ ६७॥ तनुमध्याःपृथुश्रोण्योरक्तदिव्यांबरावृताः ॥ माणिक्यमयमंजीरसिंजत्पदसरोरुहाः ॥ ६८ ॥ पादांगुलीयकश्रेणीमंजुलातिमनोहराः ॥ अनुग्रहेणामूर्तेनशिववत्किंतुसाध्यते ॥६९॥ तस्माच्छक्त्यात्ममूर्तेनसर्वंसाध्यंमहेशवत् ॥ सर्वानुग्रहकर्त्रैवस्वीकृताःपंचमूर्तयः॥ ॥ ७० ॥ एवंध्यात्वातुताःसर्वाअनुग्रहपराःशिवाः ॥ पादयोःपाद्यमेतासांदद्याच्छंखोदबिंदुभिः ॥७१ ॥

॥ अनुग्रहेणेति ॥ अमूर्तेनशक्त्यात्ममूर्तिरहितेनानुग्रहेणकिंसाध्यतेनकिमपीत्यर्थः ॥ तत्रदृष्टांतमाह ॥ शिववदिति ॥ यथानित्यमुक्तस्यविशुद्धस्वभावस्यनकिमपिप्रपंचनिवृत्त्यादिकंसाध्यंतद्वत्तदनुग्रहेणापीत्यर्थः ॥ प्रपंचबंधस्यासत्यत्वेनमुक्तेःस्वभावसिद्धत्वादितिभावः ॥ ६९ ॥ अतोऽविद्यावृतानांजीवानांशक्त्यात्ममूर्तिमदनुग्रहेणैवसर्वसाध्यमित्याह ॥ तस्मादिति ॥ तत्रापिदृष्टांतमाह ॥ महेशवदिति ॥ पूर्वोक्तमहेश्वरविभूतिवदित्यर्थः ॥ नन्वेवंशिवोपासनादिकंव्यर्थंशिवस्यानुगृहीतृत्वाभावादतआह ॥ सर्वानुग्रहेति ॥ सर्वानुग्रहकर्त्राशिवेन ॥ पंचमूर्तयःपूर्वोक्ताअग्न्यहंताकुदादयआतिवाहिक्यः ॥ ॥ ७० ॥ एतासांपंचानांदेवतानां ॥ ७१ ॥ ॥ ॥ ॥ ॥

॥ ७२ ॥ अनर्घाणियोग्यमूल्यरहितानि ॥ ७३ ॥ ७४ ॥ ७५ ॥ नमोंतमिति ॥ ओंऱ्हींनमःइतिमंत्रेणपाद्यंसमर्पयामीतिक्रमेणपाद्यादिदीपांतानुपचारान्दद्यादितिसंबंधः ॥ मधुनामाक्षिकेणयुतमाप्लुतं ॥ ७६ ॥ प्रोक्षणादीनीति ॥ आदिनाभिमर्शनाभिमंत्रणे ॥ ७७ ॥ वन्हिजाययेति ॥ वन्हिजायास्वाहातयासह ॥ तथाचओंऱ्हींस्वाहेतिमंत्रंसमुच्चार्यपायसादिकंपूर्वोक्तनैवेद्यंदद्यादितिसंबंधः ॥ समर्प्येति ॥ पानीयमितिसंवध्यते ॥ उद्वास्येति ॥ अर्पितनैवेद्यंपूर्व

हस्तेष्वाचमनीयंचमौलिष्वर्घ्यंप्रदापयेत् ॥ शंखोदबिंदुभिस्तासांस्नानकर्मचभावयेत् ॥ ७२ ॥ रक्तांबराणिदिव्यानिसोत्तरीयाणिदापयेत् ॥ मुकुटादीन्यनर्घाणिदद्यादाभरणानिच ॥ ७३ ॥ सुवासितंचश्रीगंधमक्षतांश्चातिशोभनान् ॥ सुरभीणिमनोज्ञानिकुसुमानिचदापयेत् ॥ ७४ ॥ धूपंचपरमामोदंसाज्यवर्तिंचदीपकम् ॥ सर्वंसमर्पयामीतिप्रणवंऱ्हीमुपक्रमात् ॥ ७५ ॥ नमोंतंचततोदद्यात्पायसंमधुनायुतम् ॥ साज्यशर्करयापूपकदलीगुडपूरितं ॥ ७६ ॥ प्रत्येकंकदलीपत्रेभरितंचसुवासितं ॥ ओंभूर्भुवःस्वरितिचप्रोक्षणादीनिकारयेत् ॥ ७७ ॥ ओंऱ्हीमितिसमुच्चार्यनैवेद्यंवन्हिजायया ॥ पानीयंनमइत्युक्त्वासमर्प्योद्वास्यपूर्वतः ॥ ७८ ॥ स्थलंविशोध्यगंडूषाचमनार्घ्याणिदापयेत् ॥ तांबूलंधूपदीपौचप्रदक्षिणनमस्कृती ॥ ७९ ॥ विधायप्रार्थयेद्देवताःशिरस्यंजलिमादधत् ॥ श्रीमातरःसुप्रसन्नायतिंशिवपदैषिणम् ॥ ८० ॥ रक्षणीयंप्रब्रुवंतुपरमेशपदाब्जयोः ॥ इतिसंप्रार्थ्यताःसर्वाविसृज्यचयथागतं ॥ ८१ ॥ तांसांप्रसादमुद्धृत्यकन्यकाभ्यःप्रदापयेत् ॥ गवांवाजलमध्येवाविक्षिपेन्नान्यथाक्वचित् ॥ ८२ ॥ अत्रैवपार्वणंकुर्यान्नैकोद्दिष्टंयतेःक्वचित् ॥ अत्रायंपार्वणश्राद्धेनियमःप्रोच्यतेमया ॥ ८३ ॥ कर्तास्नात्वाधृतप्राणउपवीतीसमाहितः ॥ सपवित्रकरस्त्वस्यांपुण्यतिथ्यामितिब्रुवन् ॥ ८४ ॥ करिष्येपार्वणश्राद्धमितिसंकल्प्यचोत्तरे ॥ दत्वादर्भानुपस्पृश्यसाध्यंगकृतमज्जनान् ॥ ८५ ॥ ॥ ॥ ॥ ॥

भागेऽपसार्येत्यर्थः ॥ ७८ ॥ ७९ ॥ एताउक्तदेवताः॥प्रार्थनामंत्रमाह ॥ श्रीमातरइति ॥ ८० ॥ ८१ ॥ प्रसादंनैवेद्यं ॥ कन्यकानामभावेऽनुकल्पमाह ॥ गवामिति ॥ ८२ ॥ अत्रैवदेवतापूजास्थानएवअथवेदानीमेव॥यद्वैवकारोभिन्नक्रमःपार्वणमेवेत्यर्थः ॥ पार्वणंपार्वणश्राद्धं ॥ ८३ ॥ धृतप्राणःकृतप्राणायामः ॥ इतिब्रुवन्निति ॥ अद्यब्रह्मणइत्यारभ्यास्यांशुभपुण्यतिथ्यामितिब्रुवन्संकीर्तयन्नित्यर्थः ॥ ८४ ॥ उत्तरेस्वोत्तरभागेदर्भान्दत्वाविप्रोपवेशनार्थंउपस्पृश्यअपःस्पृष्ट्वा ॥ ८५ ॥ ॥ ॥ ॥ ॥

विप्रानिति ॥ उक्तलक्षणांश्चतुरोविप्रानाहूयविश्वेदेवार्थेभवताप्रसादःक्रियतामात्मनेभवताप्रसादःक्रियतामित्येवंक्रमेणचतुर्णांवरणंकृत्वेतिसंबंधः ॥ ८६ ॥ ॥ ८७ ॥ तेषांविप्राणां ॥ ८८ ॥ ८९ ॥ ९० ॥ चतुर्थ्यंतमिति ॥ आत्मनेइदंपिंडंददामीत्येवंसंप्रोच्यपिंडान्दद्यादितिसंबंधः ॥ ९१ ॥ ९२ ॥ तस्मिन्निति ॥ तस्मिन्नेवस्थलेतस्मिन्नेवदिनेचेत्यर्थः ॥ नारायणबलिप्रयोजनमाह ॥ रक्षार्थमिति ॥ ९३ ॥ ९४ ॥ केशवनारायणादिभिर्द्वादशभिर्नामभिः ॥

आहूयचतुरोविप्रान्शिवभक्तान्दृढव्रतान् ॥ विश्वेदेवार्थेभवताप्रसादःक्रियतामिति ॥ ८६ ॥ आत्मनेभवतापश्चादंतरात्मनइत्यपि ॥ परमात्मनइत्येवंकृत्वावरणमादरात् ॥ ८७ ॥ पादौप्रक्षाल्यतेषांतुप्राङ्मुखानुपवेश्यच॥ गंधादिभिरलंकृत्यभोजयित्वाशिवाग्रतः ॥ ८८ ॥ गोमयेनोपलिप्यात्रदर्भान्प्रागग्रकल्पितान्॥ आस्तीर्यसंयतप्राणःपिंडानांचप्रदानकं ॥ ८९ ॥ करिष्यइतिसंकल्प्यमंडलत्रयमर्च्यच ॥ आत्मानमंतरात्मानंपरमात्मानमप्यतः ॥ ९० ॥ चतुर्थ्यंतंवदन्पश्चादिदंपिंडमितीरयन् ॥ ददामीतिचसंप्रोच्यदद्यात्पिंडान्कुशोदकम् ॥ ९१ ॥ दत्वोत्थायविधायाथप्रदक्षिणनमस्कृती ॥ कृत्वादत्वाब्राह्मणेभ्योदक्षिणांचयथाविधि ॥ ९२ ॥ नारायणबलिंकुर्यात्तस्मिन्नेवस्थलेदिने ॥ रक्षार्थमेवसर्वत्रविष्णोःपूजाविधिःस्मृतः ॥ ९३ ॥ कुर्याद्विष्णोर्महापूजांपायसान्नंनिवेद्यच ॥ द्वादशाथसमाहूयब्राह्मणान्वेदपारगान् ॥ ९४ ॥ केशवादिभिरभ्यर्च्यगंधपुष्पाक्षतादिभिः ॥ उपानच्छत्रवस्त्रादिदत्वातेभ्योथभूतले ॥ ॥ ९५ ॥ आस्तीर्यदर्भान्पूर्वाग्रान्भूःस्वाहाचभुवःसुवः ॥ प्रणवादिसमुच्चार्यपायसान्नंबलिंहरेत् ॥ ९६ ॥ द्वादशाहेसमुत्थायप्रातःस्नात्वाकृताह्निकः ॥ शिवभक्तान्यतीन्वापिब्राह्मणान्वाशिवप्रियान् ॥ ९७ ॥ निमंत्र्यतान्समाहूयमध्याह्नेऽभ्यज्यचाप्लुतान् ॥ संनिधौपरमेशस्यपंचावरणमार्गतः ॥ ९८ ॥ ॥ ॥

कृष्णपक्षेमृतानांसंकर्षणादिभिरित्यपिबोध्यं ॥ तेभ्योब्राह्मणेभ्यः ॥ ९५ ॥ प्रणवादीति ॥ ओंभूःस्वाहाओंभुवःस्वाहाओंसुवःस्वाहेतिव्यस्तव्याहृतीःसमुच्चार्येत्यर्थः ॥ ९६ ॥ एवमेकादशेहनिकर्तव्यमुक्त्वाततःपरस्मिन्नहनिकर्तव्यमाराधनविधिमाह ॥ द्वादशाहइति ॥ ९७ ॥ अभ्यज्यसुगंधिद्रव्यचूर्णादिभिरभ्यक्तान्कृत्वाऽऽप्लुतान्स्नातान् ॥ तस्यपरमेशस्यसंनिधौतान्संस्थाप्यपंचावरणमार्गतःपूर्वोक्तपंचावरणपूजनप्रकारेणसंपूज्येतिसंबंधः ॥ ९८ ॥

महासंकल्पमार्गेणअद्यब्रह्मणोद्वितीयपरार्धइत्यादिप्रकारेण ॥ ९९ ॥ पादौस्वपादौप्रक्षाल्य ॥ १०० ॥ तान्ब्राह्मणान् ॥ सदाशिवादिक्रमतःपूर्वोक्तसदाशिवमहेश्वरादिक्रमेण ॥ इतरांश्चतुरः ॥ १०१ ॥ परमंपरमगुरुं ॥ स्वनामतइति ॥ सदाशिवइदमासनमित्येवमुक्त्वेत्यर्थः ॥ १०२ ॥ प्रणवादीति ॥ ओं सदाशिवमावाहयामिनमइत्येवंस्वस्वनामसमुच्चरन्नावाह्येत्यर्थः ॥ १०३ ॥ अर्घोदकेनपूजाविधिसंबंध्युदकेन ॥ १०४ ॥ १०५ ॥ संपूर्णमिति ॥ संपूज्य



संपूज्यतस्यसंस्थाप्यप्राणानायम्यचत्रिधा ॥ महासंकल्पमार्गेणसंकल्प्याऽस्मद्गुरोरिह ॥ ९९ ॥ पूजांकरिष्यइत्युक्त्वाततोदर्भानुपस्पृशेत् ॥ पादौप्रक्षाल्यचाचम्यस्वयंकर्ताचवाग्यतः ॥ १०० ॥ तानासनेषुसंस्थाप्यप्राङ्मुखान् भस्मभूषितान् ॥ सदाशिवादिक्रमतोध्यात्वाऽष्टौतत्रचेतरान् ॥ १०१ ॥ गुरुंचपरमंतस्मात्परात्परगुरुंततः ॥ परमेष्ठिगुरुंध्यात्वासांबबुध्यास्वनामतः ॥ १०२ ॥ इदमासनमित्युक्त्वाचासनानिसमर्पयेत् ॥ प्रणवादिद्वितीयांतंस्वस्वनामसमुच्चरन् ॥ १०३ ॥ आवाहयामिनमइत्यावाह्यार्घोदकेनतु ॥ पाद्यमाचमनंचार्घ्यंवस्त्रगंधाक्षतानपि॥१०४॥ दत्वापुष्पैरलंकृत्यप्रणवाद्यैःस्वनामभिः ॥ सचतुर्थीनमोंतैश्चसुगंधिकुसुमैस्ततः ॥ १०५ ॥ धूपदीपौप्रदत्वाचसकलाराधनंकृतम् ॥ संपूर्णमस्त्वितिप्रोच्यनमस्कृत्यसमुत्थितः ॥ १०६ ॥ पात्राणिकदलीपत्राण्यास्तीर्याद्भिर्विशोध्यच ॥ शुद्धान्नपायसापूपसूपव्यंजनपूर्वकान् ॥ १०७ ॥ दत्वापदार्थान्कदलीनालिकेरगुडान्वितान् ॥ पात्रासनानिचपृथक्दत्वासंप्रोक्ष्यचक्रमात् ॥ १०८ ॥ परिषिच्यचसंप्रोक्ष्यविष्णोहव्यमितिब्रुवन् ॥ रक्षस्वेतिकरस्पर्शंकारयित्वासमुत्थितः ॥१०९॥ आपोशनंसमर्प्याथप्रार्थयेत्तानिदंप्रति ॥ सदाशिवादयःप्रीतावरदाश्चभवंतुमे ॥११०॥ येदेवाइतिचततोजप्त्वेदंसाक्षतंत्यजेत् ॥ नमस्कृत्यसमुत्थायसर्वत्रामृतमस्त्विति ॥ १११ ॥ ॥



मितिक्वचित्पाठः ॥ १०६ ॥ १०७ ॥ पात्रासनानिभोजनपात्राणामधस्तादाधारभूतानिदर्भपत्रादीनि ॥१०८॥१०९ ॥ तानिति ॥ इदंवक्ष्यमाणंतान्ब्राह्मणान्प्रतिप्रार्थयेदितिसंबंधः ॥ तदेवाह ॥ सदाशिवादयइति ॥ ११० ॥ येदेवाइतीति ॥ येदेवादिव्येकादशस्येतिमंत्रमित्यर्थः ॥ इदंजलं ॥ १११ ॥

वेदादीनग्निमीळइत्यादीन्वेदादिभागान्रुद्रचमकौनमस्तेरुद्रइत्यध्यायमग्नाविष्णूसजोषसेत्येकादशानुवाकांश्च ॥ रुद्रसूक्तंपरिणोरुद्रस्यहेतिस्तुहिश्रुतमित्यादिपड्टचात्मकं ॥ पंचब्रह्माणिसद्योजातमित्यादीनि ॥ ११२ ॥ ११३ ॥ आचांतान्कृताचमनान्ब्राह्मणानितिशेषः ॥ ११४ ॥ आतपत्रकंछत्रं ॥ फलकान्उपवेशनार्थंकाष्ठनिर्मितलध्वासनानि ॥ ११५ ॥ आवहन्प्रार्थयमानः ॥ ११६ ॥ उद्वास्यविसृज्य ॥ ११७ ॥ निरुद्धइति ॥ तैर्विप्रैरलमलमित्य

उक्त्वाप्रसाद्यचजपेद्गणानांत्वेत्युपक्रमात् ॥ वेदादीनूरुद्रचमकौरुद्रसूक्तंचपंचच ॥ ११२ ॥ ब्रह्माणिभोजनांतंचयावन्मंत्रांश्चशांकरान् ॥ दत्वोत्तरापोशनंचहस्तांघ्रिमुखशोधनम् ॥ ११३ ॥ कृत्वाचांतांश्चासनेषुस्थापयित्वायथासुखम् ॥ शुद्धोदकंप्रदत्वाथकर्पूरादियथोचितम् ॥ ११४ ॥ मुखवासंदक्षिणांचपादुकामातपत्रकम् ॥ व्यजनंफलकान्दंडंवैणवंचप्रदायतान् ॥ ११५ ॥ प्रदक्षिणनमस्कारैःसंतोष्याशिषमावहन् ॥ पुनःप्रणम्यसंप्रार्थ्यगुरुभक्तिमचंचलाम् ॥ ११६ ॥ सदाशिवादयःप्रीतागच्छंतुचयथासुखम् ॥ इत्युद्वास्यद्वारदेशावधिसम्यगनुव्रजन् ॥ ११७ ॥ निरुद्धस्तैःपरावृत्यद्वास्थैर्विप्रैश्चबंधुभिः ॥ दीनानाथैश्चसहितोभुक्त्वातिष्ठेद्यथासुखं ॥ ११८ ॥ प्रत्यब्दमेवंकुर्वाणोगुर्वाराधनमुत्तमम् ॥ इहभुक्त्वामहाभोगान्शिवलोकमवाप्नुयात् ॥ ११९ ॥ सूतउवाच ॥ एवंकृतानुग्रहमात्मशिष्यंश्रीवामदेवंपुनराहदेवः ॥ यन्नैमिषारण्यमुनीश्वराणांप्रोक्तंपुराव्यासमुनीश्वरेण ॥ १२० ॥ तस्मादसावादिगुरुर्भवांस्तुद्वितीयआर्योभवतोमुखाच्चात् ॥ श्रुत्वामुनींद्रस्तुसनत्कुमारःशुकायवक्ताभविताचभूमौ ॥ १२१ ॥ प्रत्येकंमुनिशार्दूलशिष्यवर्गचतुष्टयम् ॥ वैशंपायनएवस्यात्पैलोजैमिनिरेवच ॥ १२२ ॥ सुमंतुश्चेतिचत्वारोव्यासशिष्यामहौजसः ॥ अगस्त्यश्चपुलस्त्यश्चपुलहःक्रतुरेवच ॥ १२३ ॥ ॥ ॥ ॥

नुगंतुंप्रतिरुद्धइत्यर्थः ॥ द्वास्थैरतिथिभूतैः ॥ ११८ ॥ ११९ ॥ देवःस्कंदः ॥ १२० ॥ असौव्यासमुनीश्वरः ॥ आर्योगुरुः ॥ १२१ ॥ प्रत्येकमिति ॥ व्यासप्रभृतीनामेकैकस्येत्यर्थः ॥ तत्रव्यासशिष्यानाह ॥ वैशंपायनइति ॥ यद्यपिऋग्वेदादिक्रमेणपैलोवैशंपायनइत्येवक्रमोवक्तुमुचितःपैलायसंहितामाद्यांवह्वृचाख्यामुवाचह ॥ वैशंपायनसंज्ञायनिगदाख्यंयजुर्गणं ॥ साम्नांजैमिनयेप्राहतथाछंदोगसंहितां ॥ अथर्वांगिरसींनामस्वशिष्यायसुमंतवइतिश्रीमद्भागवतादिपुतथादर्शनात् ॥ तथापियजुर्वेदेशिवमंत्राणांवाहुल्येनशिवशास्त्रेतस्यप्राधान्यादेवंक्रमउक्तः ॥ १२२ ॥ वामदेवशिष्यानाह ॥ अगस्त्यइति ॥ १२३ ॥

सनत्कुमारशिष्यानाह ॥ सनकइति ॥ १२४ ॥ १२५ ॥ परमःपरमगुरुः ॥ शुकयोगिनइति ॥ शुकयोगिनोपिपूज्याःकिमुतसर्वेषामितिभावः ॥१२६॥ इदंपूर्वोक्तं ॥ वर्गचतुष्टयेअधुनोक्तशिष्यवर्गचतुष्टये ॥ १२७ ॥ एवंप्रणवार्थादिकमभिधायभगवान्स्कंदोवामदेवमाशिषाभिनंदयति ॥ एतदिति ॥ एतन्मंडलंपूर्वोक्तमुनिवृंदं ॥ परशिवाधिष्ठानरूपमिति ॥ एतद्धृदयेषुसर्वदाध्येयत्वेनपरशिवएवतिष्ठतीत्येतन्मंडलस्यपरशिवाधिष्ठानरूपत्वं ॥ अतएवाह ॥ सदेति ॥ ननुपरशिवाधिष्ठानरूपस्याप्येतन्मंडलस्यसंसारित्वात्कथंश्रेयस्करत्वमतआह ॥ वेदादीति ॥ वेदादिप्रविभागेषुकल्पितंतस्माद्वाएतस्मादात्मनइत्यादिवाक्यैःकल्पनामात्रेणप्रतिपादितंयन्महाकाशादिपंचमहाभूतादिकंतेनावृतमपिप्रकृत्यादिविकारयुक्तमपिशिवप्रसादेनमायाकृतमोहाभावात्ज्ञानप्रदा

तवशिष्यामहात्मानोवामदेवमहामुने ॥ सनकश्चसनंदश्चसनातनमुनिस्ततः ॥ १२४ ॥ सनत्सुजातइत्येतेयोगिवर्याःशिवप्रियाः ॥ सनत्कुमारशिष्यास्तेसर्ववेदार्थवित्तमाः ॥ १२५ ॥ गुरुश्चपरमश्चैवपरात्परगुरुस्ततः ॥ परमेष्ठिगुरुश्चैतेपूज्याःस्युःशुकयोगिनः ॥ १२६ ॥ इदंप्रणवविज्ञानंस्थितंवर्गचतुष्टये ॥ १२७ ॥ एतन्मंडलमद्भुतंपरशिवाधिष्ठानरूपंसदावेदांतार्थविचारपूर्णमतिभिःपूज्यंयतींद्रैःपरम् ॥ वेदादिप्रविभागकल्पितमहाकाशादिनाप्यावृतंत्वत्संतोषकरंतथास्तुजगतांश्रेयस्करंश्रीप्रदम् ॥ १२८ ॥ इदंरहस्यंपरमंशिवोदितंवेदांतसिद्धांतविनिश्चितंपरम् ॥ मत्तःश्रुतंयद्भवताततोमुनेभवन्मतंप्राज्ञतमावदंति ॥ १२९ ॥ तस्मादनेनैवपथागतःशिवंशिवोऽहमस्मीतिशिवोभवेद्यतिः ॥ पितामहादिप्रविभागमुक्तयोनद्योयथासिंधुमिमाःप्रयांति ॥ १३० ॥ सूतउवाच ॥ एवंमुनीश्वरायैतदुपदिश्यसुरेश्वरः ॥ स्मृत्वाश्रीचरणांभोजंपित्रोःसर्वसुरार्चितम् ॥ १३१ ॥ कैलासशिखरंप्रापकुमारःशिखरावृतं ॥ वामदेवोपिसच्छिष्यैःसंवृतःशिखिवाहनम् ॥ १३२ ॥ ॥ ॥ ॥ ॥

नेनत्वत्संतोषकरंतथाजगतांश्रेयस्करंश्रीप्रदंचास्त्वित्यर्थः ॥ १२८ ॥ भवन्मतमिति ॥ वामदेवमतेनेतियत्पूर्वमुक्तंतदेतन्मूलकमितिभावः ॥ १२९ ॥ अनेनवामदेव्येन ॥ अस्मीतीति ॥ भावयन्निति शेषः ॥ पितामहादीति ॥ पितामहादिप्रविभागेषुब्रह्मविष्णुरुद्रादिप्रविभागेषुतत्तद्रूपेषुतत्तत्तादात्म्यप्राप्तिरूपामुक्तयोभवंतीतिशेषः ॥ एवंक्रममुक्तौदृष्टांतमाह ॥ नद्यइति ॥ १३० ॥ मुनीश्वरायवामदेवाय ॥ सुरेश्वरःस्कंदः ॥ पित्रोःशिवयोः ॥ १३१ ॥ कुमारःस्कंदःकैलासशिखरंप्राप ॥ अतएवास्याःसंहितायाःकैलाससंहितेतिनाम्नःप्रसिद्धिः ॥ शिखिवाहनंस्कंदंअनुसृत्येतिशेषः ॥ १३२ ॥ ॥

॥ १३३ ॥ वेदागमेति ॥ वेदेषुशैवागमेषुयोरसःपरानंदस्तेनोत्कटैःपूर्णैरित्यर्थः ॥ वेदांतपरमोत्कटैरितिपाठांतरं ॥ १३४ ॥ देवदेव्योःशिवयोः ॥ तत्रैव शिवचरणसमीपएव ॥ १३५ ॥ एवंसूतःस्कंदवामदेवसंवादमुखेनप्रणवार्थमभिधायमुनीनुपदिशति ॥ भवंतइति ॥ १३६ ॥ १३७ ॥ एतत्पुराणमुप संहरति ॥ इतिवइति ॥ १३८ ॥ रुद्रसाहस्रमित्यस्यनामांतरमन्वर्थं ॥ एतच्छ्रवणादिफलमाह ॥ शिवप्रदमित्यादिना ॥ १३९ ॥ तेमुनयः ॥ १४० ॥

गत्वाकैलासशिखरंदृष्ट्वाचरणमीशयोः ॥ भक्त्यावेपितसर्वांगोविस्मृत्यस्वकलेवरम् ॥ १३३ ॥ पपातसंनिधौभूयो नत्वानत्वासमुत्थितः ॥ स्तुत्वाबहुविधैःस्तोत्रैर्वेदागमरसोत्कटैः ॥ १३४ ॥ निधायचरणांभोजंदेवदेव्योःस्वमूर्धनि ॥ पूर्णानुग्रहमासाद्यतत्रैवन्यवसत्सुखम् ॥ १३५ ॥ भवंतोपिविदित्वैवंप्रणवार्थंमहेश्वरम् ॥ अत्रैवसुखमासीनाःश्रीवि श्वेश्वरपादयोः ॥ १३६ ॥ सायुज्यरूपामतुलांभजध्वंमुक्तिमुत्तमाम् ॥ अहंगुरुपदांभोजसेवायैबादराश्रमं ॥ १३७ ॥ गमिष्येभवताभूयःसत्संभाषणमस्तुमे ॥ इतिवश्वसमाख्यातंयत्पृष्टोऽहंमुनीश्वराः ॥ १३८ ॥ पुराणंरुद्रसाहस्रंशि वसंज्ञंशिवप्रदम् ॥ सर्वपापप्रशमनंसर्वारिष्टनिवारणम् ॥ १३९ ॥ सर्वाभीष्टप्रदंनॄणांपरत्रेहचसौख्यदम् ॥ एत च्छ्रुत्वाचतेसर्वेआनंदंपरमंगताः ॥ १४० ॥ हर्षगद्गदयावाचाप्रणेमुस्तंपुनःपुनः ॥ अस्माकंचेतसोभ्रांतिर्गतावैकृपया तव ॥ १४१ ॥ तच्छ्रुत्वाचपुनर्वाक्यमुवाचऋषिसत्तमान् ॥ व्यासशिष्यस्तदुक्तंहिकथयामासतांस्तदा ॥ १४२ ॥ नास्तिकायनवक्तव्यंश्रद्धाहीनायवैसदा ॥ अभक्तायनवाच्यंहिनचाशुश्रूषवेतथा ॥ १४३ ॥ अष्टादशपुराणानिइ तिहासान्यनेकशः ॥ वेदार्थांश्चाप्यनेकांश्चविचार्यचपुनःपुनः ॥ १४४ ॥ सारमेतत्समुद्धृत्यव्यासेनपरिभाषितं ॥ अ भक्तोभक्तिमाप्नोतिभक्तेभक्तिश्चवर्धते ॥ १४५ ॥ एकवारंश्रुतवतःपापंनिर्भस्मतांव्रजेत् ॥ पुनःश्रुतेचतद्भक्तिर्जायतेपु रुषस्यहि ॥ १४६ ॥ पुनःश्रुतेविवृद्धिःस्याद्भक्तेश्चैवनसंशयः ॥ पुनःश्रुतेशिवंसाक्षात्पश्यंतिज्ञानचक्षुषः ॥ १४७ ॥ पु नःश्रुतेसोहमितिपश्यंतीतिसुनिश्चितम् ॥ तस्मात्पुनःपुनःश्राव्यंभुक्तिमुक्तिफलेप्सुभिः ॥ १४८ ॥ ॥

तंसूतं ॥ १४१ ॥ तदुक्तंव्यासोक्तं ॥ तान्मुनीन् ॥ १४२ ॥ १४३ ॥ १४४ ॥ १४५ ॥ निर्भस्मतांअतिशयेनभस्मसाद्भावं ॥ तद्भक्तिःशिवभक्तिः ॥ १४६ ॥ १४७ ॥ सोहमितीति ॥ सशिवोहमेवेतिपूर्वोक्तप्रकारेणतादात्म्यभावनयापश्यंतीत्यर्थः ॥ १४८ ॥ ॥ ॥

पंचावृत्तिःपंचवारमावृत्तिः ॥ १४९ ॥ १५० ॥ परमांमोक्षरूपां ॥ १५१ ॥ ॥ १५२ ॥ ॥ १५३ ॥ १५४ ॥ एतदेवेति ॥ एतत्शिवतत्वमेवपरंसर्वो
त्कृष्टंनततोन्यत्किमपीतिमत्वेत्यर्थः ॥ तथाचश्रुतिः ॥ तवश्रियेमरुतोमर्जयंतरुद्रयत्तेजनिमचारुचित्रं ॥ पदंयद्विष्णोरुपमंनिधायितेनपासिगुह्यंनामगोना
मिति ॥ अस्याअर्थः ॥ हेरुद्रशिवतवचारुचित्रंजनिमलिंगंयन्मरुतोदेवाःश्रियेसंपदेअर्चयंति ॥ यत्विष्णोरुपमंमयासहितंश्रीसहितंपदंयेननिधायिदत्तंतेन
पासीतिसंवंधः ॥ अथवोपममित्यस्यार्थांतरं ॥ विष्णोःपदमुपममुपमात्वेननिधायिनिश्चितं ॥ उपवृंहितोयमर्थःशंकरसंहितायांविष्णुमुद्दिश्यनंदिना ॥ यदने
नार्चितंलिंगंचारुचित्रंविमुक्तिदं ॥ इंद्रनीलमयंयेनसुसंप्राप्तंपदंत्विदमिति ॥ तथाश्वेताश्वतराणांमंत्रोपनिषदुपक्रमेब्रह्मवादिनोवदंतिकिंकारणंब्रह्मकुतःस्म
जाताजीवामकेनक्कचसंप्रतिष्ठिताः अधिष्ठिताःकेनसुखेतरेषुवर्तामहेब्रह्मविदोव्यवस्थामितिकेषांचिद्ब्रह्मवादिनामृषीणांब्रह्मजगन्मूलकारणमित्येतावन्निश्चित

पंचावृत्तिःप्रकर्तव्याव्यासस्यवचनंत्विदं ॥ यदुद्दिश्यफलंश्रेष्ठंतत्प्राप्नोतिसुनिश्चितम् ॥१४९॥ नदुर्लभंभवेत्तस्ययेने
दंश्रुतमुत्तमम् ॥ इत्युक्तास्तेमुनिश्रेष्ठाःशुश्रुवुःपरयामुदा ॥ १५० ॥ पंचकृत्वस्तुतच्छ्रुत्वालब्ध्वाचशिवदर्शनम् ॥ पु
रातनाश्चमुनयःसिद्धिंचपरमांगताः ॥ १५१ ॥ इत्येवंपंचशःश्रुत्वाह्यानंदंपरमंगताः ॥ तत्रैवपूजयामासुर्नानावस्त्रैः
सुशोभनैः ॥ १५२ ॥ चंदनैःसुविचित्रैश्चनानालंकरणैस्तथा ॥ नमस्कारैःस्तवैश्चैवस्वस्तिवाचनपूर्वकं ॥ १५३ ॥
आशीर्भिर्विविधैश्चैववर्धयामासुरंजसा ॥ संतुष्टाश्चैवतेसर्वेसंतुष्टःसूतएवच ॥ १५४ ॥ परस्परंचसंतुष्टाःशिवभक्ति
परायणाः ॥ एतदेवपरंमत्वानमंतिचभजंतिच ॥ १५५ ॥ ॥ ॥ ॥

वतांकारणभूतंब्रह्मकोदेवइतिविशिष्यबुध्यमानानांकारणंब्रह्मकिमित्यादिरूपान्प्रश्नान्प्रदर्श्ययः कारणानिनिखिलानितानिकालात्मयुक्तान्यधितिष्ठत्येकइ
त्यारभ्यसंयुक्तमेतत्क्षरमक्षरंचव्यक्ताव्यक्तंभरतेविश्वमीशःक्षरंप्रधानममृताक्षरंहरः क्षरात्मानावीशतेदेवएकइत्यादिभिस्तैर्निर्णीतमर्थंप्रदर्शयद्भिर्मंत्रैःकालाद्यवां
तरकारणवृंदस्याधिष्ठाताहरेशादिशब्दवाच्योभगवान्परःशिवएवकारणंब्रह्मेतिस्फुटीकृतं ॥ अन्येपिमंत्रास्तत्रैवएकोहिरुद्रोनद्वितीयायतस्थुः ॥ ईशानोज्यो
तिरव्ययः ॥ तंविश्वरूपंभवमृतमीड्यं ॥ एकोहंसोभुवनस्यास्यमध्ये ॥ महान्प्रभुर्वैपुरुषः ॥ छंदांसियज्ञाःक्रतवोव्रतानिभूतंभव्यंयच्चवेदावदंति ॥ अस्मा
न्मायीसृजतेविश्वमेतत् ॥ मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरं ॥ तस्यावयवभूतैस्तुव्याप्तंसर्वमिदंजगत् ॥ योदेवानांप्रभवोद्भवश्चविश्वाधिपोरुद्रोमहर्षिः ॥ ४३ ॥
॥ तमाहुरग्र्यंपुरुषंमहांतंसएवकालेभुवनस्यास्यगोप्ताविश्वाधिपःसर्वभूतेषुगूढः ॥ तमीश्वराणांपरमंमहेश्वरंतंदेवतानांपरमंचदैवतं ॥ पतिंपतीनांपरमंपरस्ता
द्विदामदेवंभुवनेशमीड्यं ॥ नतस्यकश्चित्पतिरस्तिलोकेनचेशितानैवचतस्यलिंगं ॥ सकारणंकरणाधिपाधिपोनचास्यकश्चिज्जनितानचाधिपः ॥ सविश्वकृद्वि

श्वविदात्मयोनिःकालकारोगुणीसर्वविद्यः ॥प्रधानक्षेत्रज्ञपतिर्गुणेशःसंसारमोक्षस्थितिबंधहेतुरित्यादयउक्ताःसकलंप्रकृत्यधिष्ठातृत्वसर्वकारणत्वसर्वेश्वरत्वस
र्वोत्तमत्वानन्यपतित्वसर्वोपास्यत्वादिकंनिखिलकल्याणगुणरत्नाकरेभगवतिसांबशिवएवनिधायतत्रैवकात्स्न्र्येनपर्यवसिताः ॥ तथाथर्वशिरसिप्रथमखंडेदे
वाहवैस्वर्गंलोकमगमंस्तेदेवारुद्रमपृच्छन्कोभवानितिपृष्टवतोदेवान्प्रतिसोब्रवीदहमेकःप्रथमंसंवर्तामिचभविष्यामिचनान्यःकश्चिन्मत्तोव्यतिरिक्तइत्यादिनै
वंमांयेवेदसर्वान्देवान्वेदेत्यनेनशिववचनेनशिवस्यैवसर्वात्मत्वंप्रतिपादितं ॥ अनंतरंततोदेवारुद्रंनापश्यन्तेदेवारुद्रंध्यायंतिततोदेवाऊर्ध्वबाहवःस्तुवंतीति
देवैरुपास्यमानत्वंस्तूयमानत्वंचदर्शितं ॥ ततश्चद्वितियखंडेयोवैरुद्रःसभगवान्भूर्भुवःस्वर्यश्चब्रह्मातस्मैवैनमोनमइत्यारभ्ययश्चविष्णुर्यश्चमहेश्वरइत्यादिप्र
कारेणब्रह्मविष्णुरुद्रमहालक्ष्मीसरस्वतींद्रादीनांमहाभूतादीनांचतद्विभूतित्वंप्रथमखंडोक्तसर्वात्मवचनेनसिद्धंविशिष्यनिरूपितं ॥ तृतीयचतुर्थखंडयोस्तदी
यनामवृंदनिर्वचनमुखेनतस्यपरभावःस्फुटीकृतः ॥ पंचमखंडेतस्योपासनादेवमोक्षइत्युक्त्वापाशुपतयोगात्मकतदुपास्तिप्रकारोदर्शितः ॥ तदेवमादितआ
रभ्यांतंविमृश्यमानमथर्वशिरोवचनजातंशिवएवसर्वतोज्यायानितिस्फुटीकरोति ॥ तथामंत्रोपनिषदिशिवस्याशेषाधिष्ठानप्रतिपादनपरामंत्राःश्रूयंते ॥ योयो
निंयोनिमधितिष्ठत्येकोयस्मिन्निदंसंचविचैतिसर्वं ॥ एवंसदेवोभगवान्वरेण्योयोनिस्वभावानधितिष्ठत्येकः ॥ सर्वमेतद्विश्वमधितिष्ठत्येकोगुणांश्वसर्वान्विनि
योजयेद्यः ॥ घृतात्परंमंडमिवातिसूक्ष्मंज्ञात्वाशिवंसर्वभूतेषुगूढं ॥ एषदेवोविश्वकर्मामहात्मासदाजनानांहृदयेसंनिविष्टः ॥ योदेवोग्नौयोप्सुयोविश्वंभुवन
माविवेशयओषधीषुयोवनस्पतिषुतस्मैदेवायनमोनमइत्याद्याः ॥ योरुद्रोअग्नौयोअप्सुयओषधीषुयोरुद्रोविश्वाभुवनाविवेशतस्मैरुद्रायनमोअस्त्वितितैतिरीय
शाखायामपि ॥ तथारुद्राध्यायेनमःस्रोतस्यायचद्वीप्यायचेत्याद्यामंत्राःसर्वेषुवस्तुषुशिवसद्भावंप्रतिपादयंति ॥ तथावृहदारण्यकश्रुतिर्यएषोंतर्हृदयआकाश
स्तस्मिन्शेतेइतिदहरविद्योपास्यंहार्दपरमेश्वरमुपक्रम्यसर्वस्यवशीसर्वस्येशानः सर्वस्याधिपतिःसनसाधुनाकर्मणाभूयान्नोएवासाधुनाकनीयानेषसर्वेश्वरएषभू
ताधिपतिरेषभूतपालएषसेतुर्विधरणएषांलोकानामसंभेदायेतिशिवस्यानन्यसाधारणंप्रभावमवर्णयत् ॥ तथाछांदोग्यश्रुतिःअथयदिदमस्मिन्ब्रह्मपुरेदहरंपुं
डरीकंवेश्मदहरोस्मिन्नंतराकाशइत्युपक्रम्यएषआत्मापहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोपिपासःसत्यकामःसत्यसंकल्पइतितद्गुणकीर्तनेनअथयइ
हात्मानमनुविद्यव्रजंत्येतांश्वसत्यान्कामांस्तेषांसर्वेषुलोकेषुकामचारोभवतीत्यादिनातदुपासकानांमहाफलकीर्तनेनचशिवस्यमहिमानंप्राकाशयत् ॥ तथा
नारायणाख्यमहोपनिषदिसहस्रशीर्षंदेवंविश्वाक्षंविश्वशंभुवमित्यादिनोपासकतादात्म्येनानुसंधेयंनारायणंतस्यहृदयकमलंतत्रवैश्वानरराग्निशिखांचवर्णयि
त्वातस्याः शिखायामध्येपरमात्माव्यवस्थितइतिहार्दस्यशिवस्यतन्मध्यवर्तित्वप्रदर्शनेनसब्रह्मसाशिवइत्यादिनेतरेषांताद्विभूतित्वख्यापनेनचतस्यैवभवंद्योतितं
॥ श्वेताश्वतरशाखिनांमंत्रोपनिषदिचयोब्रह्माणंविदधातिपूर्वंयोवैवेदांश्वप्रहिणोतितस्माइत्युक्तंतत्रयद्यप्ययंमंत्रः शिवपरःस्पष्टंनप्रतीयतेतथाप्यस्यशिवपरत्व
मेवत्रोद्धव्यं ॥ योग्रेमांविदधेपूर्वंज्ञानंचप्रहिणोतिमे ॥ तत्प्रसादान्मयाप्राप्तंप्राजापत्यमिदंपदं ॥ तथाब्रह्माणंमुनयःपूर्वंसृष्ट्वातस्मैमहेश्वरः ॥ दत्तवानखि

लान्वेदानात्मन्येवव्यवस्थितानित्यादिशैवमात्स्यादिश्रुतब्रह्मादिवचनैरुपबृंहणात् ॥ ननुबृहदारण्यकेवशित्वाम्नानंनिर्गुणप्रकरणमध्यपातित्वान्निर्विशेषब्र ह्मपरंनसगुणशिवपरमितिचेन्न प्रकरणस्यनिर्विशेषब्रह्मपरत्वेपिसगुणोपाधिविशेषगतगुणकीर्तनद्वारैवस्तुतौपर्यवसानस्यवक्तव्यत्वात् ॥ हृदयकोशम ध्यगतस्येशानसर्वेश्वरभूताधिपतिशब्दितस्याशिवस्यैवगुणकीर्तनस्तुतिद्वारेणप्रतीतेः ॥ छांदोग्येपिसत्यकामादिगुणोपदेशस्तद्विशिष्टब्रह्मोपासनाविधानं चेत्युभयमपिशिवपरमेव ॥ अस्मिन्कामाःसमाहिताइतितदुभयवाक्येनपूर्वापरमंत्रसमर्पितंशिवरूपमुपास्यंब्रह्मप्रस्तुत्यतस्मिन्यदंतस्तदन्वेष्टव्यमित्युक्त्या शिवस्यैवोपास्यत्वप्रतीतेः ॥ नन्वेवंसतिपतिंविश्वस्यात्मेश्वरं॑शाश्वतं॑शिवमच्युतं ॥ नारायणंमहाज्ञेयं ॥ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआ सीत् ॥ इंद्रोयातोवसितस्यराजा॥विश्वस्मादिंद्रउत्तरः॥अग्निरग्रेप्रथमोदेवतानां॥अग्निर्वैदेवानामवमोविष्णुःपरमस्तदंतरेणसर्वाअन्यादेवताइतिश्रुतिपुदेवतां तराणामप्यपरिच्छिन्नैश्वर्यश्रवणात्कथंशिवएवापरिच्छिन्नैश्वर्यइतिचेत् ॥ उच्यते ॥ वहूनांविकल्पेनसर्वेश्वरत्वासंभवः ॥ वस्तुनिविकल्पायोगात् ॥ ना पिसमुच्चयेन ॥ परस्परेशितृत्वापत्तेः ॥ नापिकल्पभेदेनव्यवस्था॥सर्वेषामप्यैश्वर्यस्यकालतःपरिच्छिन्नतयानकस्यापिसर्वेश्वरत्वमितिदोषापातात् ॥ तस्मा त्तादृशेषुवचनेषुकानिचित्प्रतीतार्थपराणिकानिचिदन्यथानेयानीतिसर्वैरभ्युपगंतव्यं ॥ तत्रबिभेत्यल्पश्रुताद्वेदोमामयंप्रतरिष्यति ॥ इतिहासपुराणाभ्यांवेदा र्थमुपवृंहयेत् ॥ अनंतशाखासापेक्षेवैदिकार्थविनिर्णये ॥ स्वबुद्धिकल्पितान्यायाद्वरीयोह्युपबृंहणं ॥ वेदार्थोयःस्वयंज्ञातस्तत्राज्ञानंभवेदपि ॥ ऋषिभिर्नि श्चितेतस्मिन्काशंकास्यान्महात्मनामित्यादिव्यासादिवचनैर्यानिसोपवृंहणानिवचनानितान्येवयथार्थपराणीतिब्रह्मविष्ण्वग्निशक्रार्कजलभूमिपुरोगमाः ॥ सु रासुराःसंप्रसूतास्ततःसर्वेमहेश्वरादित्यादीनिब्रह्मांडपुराणादिदृष्टान्युपवृंहणानितेषामनुसारेणव्यवस्थापनंन्यायः॥ पुरुषबुद्धीनामव्यवस्थितत्वेनतदुन्नीतैर्न्या यैर्व्यवस्थित्यसिद्धेः ॥ अथवेश्वरस्यैवेंद्रादिसर्वशब्दवाच्यत्वात्सर्वेषांवचनानांपरस्परविरुद्धत्वाभावएव ॥ नामानितवगोविंदयानिलोकेमहांतिच ॥ तान्येव ममनामानिनात्रकार्याविचारणेतिहरिवंशेकैलासयात्रायांशिववचनात् ॥ शिवंप्रस्तुत्यसर्वाणिह्वाएतस्यनामधेयानीत्याश्वलायनस्मरणाच्च ॥ कानिचिद्वेद वाक्यानिब्राह्मणावेदवित्तमाः ॥ रुद्रमूर्तिंसमाश्रित्यशिवेपरमकारणे ॥ पर्यवस्यंतिविप्रेंद्रास्तथावाक्यानिकानिचित् ॥ विष्णुमूर्तिंसमाश्रित्यब्रह्ममूर्तिंचका निचित् ॥ आग्नेयींमूर्तिमाश्रित्यश्रुतिवाक्यानिकानिचित् ॥ सूर्यमूर्तिमुपाश्रित्यतथैवान्यानिकानिचित् ॥ एवंमूर्त्यभिधानेनद्वारेणैवमुनीश्वराः ॥ प्रतिपा द्योमहादेवःस्थितःसर्वासुमूर्तिष्वित्यादिस्कांदोक्तिदर्शनाच्च ॥ शिवस्तुसर्वहविषांभोक्ताचैवफलप्रदः॥ सर्वदेवतनुर्भूत्वासर्वात्मासर्वसंस्थितः ॥ हव्यंवहतिदे वानांकव्यंकव्याशिनामपि ॥ पाकंचकुरुतेवन्हिःसोपितच्छक्तिवोधितः ॥ गोप्ताचैवजगच्छास्ताशक्रःसर्वामरेश्वरः ॥ यज्ञानांफलदोदेवोमहादेवनियोगत इतिकूर्मपुराणाच्च ॥ महाभारतेआरण्यपर्वणितीर्थयात्राविधौ ॥ ततोगच्छेत्सुवर्णाक्षंत्रिषुलोकेषुविश्रुतं ॥ यत्रविष्णुःप्रसादार्थंरुद्रमाराधयत्पुरा ॥ वरांश्चसु वहून्लेभेदैवतैरपिदुर्लभान् ॥ उक्तंचत्रिपुरघ्नेनपरितुष्टेनभारत ॥ अपिचान्यैःप्रियतमोलोकेकृष्णभविष्यसि ॥ त्वन्मुखंचजगत्सर्वंभविष्यतिनसंशयइति ॥

द्रोणपर्वणिअश्वत्थामानंप्रतिलिंगार्चनादेवकृष्णार्जुनयोरुत्कर्षःप्रतिपादितः ॥ शांतिपर्वणि ॥ यंविष्णुरिंद्रःसूर्यश्चब्रह्मालोकपितामहः ॥ स्तुवंतिविविधैःस्तोत्रैर्देवदेवंमहेश्वर ॥ तमर्चयंतियेशश्वद्दुर्गाण्यतितरंतितइतिभीष्मवाक्यं ॥ आनुशासनिके ॥ इंद्रंप्रत्युपमन्युवचनं यस्यविष्णुश्चब्रह्माचत्वंचशक्रसहामरैः॥ अर्चयंतिसदालिंगंतस्माच्छ्रेष्ठतरोहिकइति ॥ तथातत्रैव सएवभगवानीशःसर्वतत्वादिरव्ययः ॥ सर्वतत्वविधानज्ञःप्रधानपुरुषेश्वरः ॥ सोसृजद्दक्षिणादंगाद्ब्रह्माणंलोकभावनं ॥ वामपार्श्वात्तथाविष्णुमादौप्रभुरथासृजत् ॥ शांतिपर्वणि ॥ ईश्वरश्चेतनःकर्तापुरुषःकारणंशिवः ॥ विष्णुर्ब्रह्माशशीसूर्यःशक्रोदेवाश्चसान्वयाः ॥ सृज्यंतेग्रस्यंतेचैवतमोभूतमिदंयदा ॥ अप्रज्ञातंजगत्सर्वंतदाह्येकोमहेश्वरइति ॥ तथातत्रैव ॥ निहतास्तेनपूर्वंत्वंहतवानसिवैरिपून् ॥ अप्रमेयप्रभावंतंदेवदेवमुमापतिं ॥ भजस्वनित्यंप्रयतोविश्वेशंहरमव्ययमितिपार्थंप्रतिकृष्णवचनं ॥ आश्वमेधिके ॥ वयंसर्वेचतद्भक्ताःसचास्माकंप्रसीदति ॥ तत्प्रसादाद्वयंराज्यंप्राप्ताःकौरवनंदनेत्यारभ्यकस्तांसेनांमहाराजमनसापिप्रधर्षयेत् ॥ द्रोणकर्णमुखैर्गुप्तांमहेष्वासैःप्रहारिभिः ॥ ऋतेदेवान्महेष्वासाद्बहुरूपान्महेश्वरात् ॥ तस्यैवचप्रसादेननिहताःशत्रवस्तवेतियुधिष्ठिरंप्रतिभीष्मवचनं ॥ राजधर्मे सएवभगवान्ध्यात्वाचिरंशूलवरायुधः ॥ असृजत्सर्वशास्त्राणिमहादेवोमहेश्वरः ॥ इत्येताःशंकरप्रोक्ताविद्याःशब्दार्थसंयुताः ॥ सौप्तिके ॥ अहंयथावदाराध्यःकृष्णेनाक्लिष्टकर्मणा ॥ तस्मादिष्टतमःकृष्णादन्योममनविद्यतइति ॥ हरिवंशे ॥ इतिसंस्तूयमानस्तुभगवान्गोवृषध्वजः ॥ प्रसार्यदक्षिणंबाहुंवासुदेवमथाब्रवीत् ॥ मनीषितानामर्थानांप्राप्तिस्तेस्तुसुरोत्तम ॥ पारिजातंचहर्तासिमाभूत्तेमनसिव्यथा ॥ पुरामैनाकमाश्रित्यतपस्त्वमकरोर्यदा ॥ तदाममवचःकृष्णसंस्मृत्यस्थैर्यमामुहि ॥ अवध्यस्त्वमजय्यश्चमत्तःशूरतरस्तथा ॥ भवितासीत्यवोचंयत्तत्तथानतदन्यथेत्युक्तं ॥ रामायणेयुद्धकांडेतावदादित्यहृदये ॥ ब्रह्मेशानाच्युतेशायसूर्यायादित्यवर्चसे ॥ भास्वतेसर्वभक्षायरौद्रायवपुषेनमइत्यत्ररौद्रायवपुषइतिविशेषणसामर्थ्याच्छिवस्यैवब्रह्माच्युतहरेशत्वंदर्शितम् ॥ आरण्यकांडेपि कृताभिषेकःसरराजरामःसीताद्वितीयःसहलक्ष्मणेन॥कृताभिषेकस्त्वगराजपुत्र्यारुद्रःसविष्णुर्भगवानिवेशइत्युपमानिबंधनव्याजेनादिकविनाशिवोत्कर्षःस्फुटीकृतः ॥ उत्तरकांडेपिकर्तव्यक्रतुविशेषविचारसमयेवसिष्ठादीन्प्रतिस्वचिकीर्षितेख्यापिते तेतुरामस्यतच्छ्रुत्वानमस्कृत्यवृषध्वजं ॥अश्वमेधेद्विजाःसर्वेपूजयंतिस्मनित्यशइतिशिवसंबंधित्वेनैवाश्वमेधस्यश्लाघ्यतोपन्यासादश्वमेधेनरामचंद्रःशिवमाराधयदितिस्पष्टमेव ॥ तथारामोपिपालयामासराज्यंपरमधार्मिकइत्यारभ्यपठितेन विशेषाद्ब्राह्मणान्सर्वान्पूजयामासचेश्वरं॥ यज्ञेनयज्ञहंतारमश्वमेधेनशंकरमितिकौर्मवचनेन अभिषिक्तस्ततोराज्येरामोराजीवलोचनः ॥ पालयन्पृथिवींसर्वांधर्मेणमुनिपुंगवाः ॥ अयजद्देवदेवेशमश्वमेधेनशंकरमित्यादित्यपुराणवचनेनशिवस्यैवरामाराध्यत्वमुक्तं ॥यत्तुबालकांडे शिवनारायणयोःसमरसन्नाहे अधिकंमेनिरेविष्णुमितिदेवानांनारायणबलाधिक्यप्रतिपत्तिवचनंतद्भारतादिपुशिवेननारायणायस्वस्मादधिकशौर्यंदत्तमितिप्रतिपादनात्स्वदत्तवरदानपरिपालनार्थंशिवस्यन्यूनबलत्वाभिमानेनान्यथासिद्धं ॥ भागवतेचतुर्थस्कंधेदक्षाध्वरे कुपितस्यशिवस्यशांतिप्रार्थयमानान्देवान्प्रतिब्रह्मणोवाक्यं ॥ नाहंनयज्ञोनचयूयमन्येयेदेहभाजोमुनयश्चतत्वम्

विदुःप्रमाणंबलवीर्ययोर्वातस्यात्मतंत्रस्यकथांविधित्सेदिति ॥ अष्टमस्कंधेपिशिवंप्रतिदेवानांवचनम् ॥ नतेगिरित्राखिललोकपालविरिंचिवैकुंठसुरेंद्रगम्यं ॥
ज्योतिःपरंयत्ररजस्तमश्चसत्वंनयद्ब्रह्मनिरस्तभेदमिति अत्रापिप्रतिसर्गप्रसूतानांब्रह्मणांशास्त्रविस्तरम् ॥ उपदेष्टासएवादौकालावच्छेदवर्तिनाम् ॥ईशानःसर्व
विद्यानांसएवादिगुरुर्बुधाः ॥ तस्यशिष्योमहाविष्णुःसर्वज्ञानमहोदधिरिति ॥ कूर्मपुराणेपूर्वभागेब्रह्मविष्णुरुद्रान्प्रस्तुत्योक्तं ॥एभ्यःपरतरोदेवस्त्रिमूर्तिःपरमात
नुः॥माहेश्वरीत्रिनयनायोगिनांशांतिदासदेति ॥ उत्तरभागेपि ॥सर्वासामपिशक्तीनांब्रह्मविष्णुशिवात्मकाः ॥प्रधानाःसंस्मृतादेवाःशक्तयःपरमात्मनः॥आभ्यः
परस्ताद्भगवान्ब्रह्माविष्णुःसदाशिवः ॥ गीयतेसर्वशक्त्यात्माशूलपाणिर्महेश्वरः ॥ एनमेकेवदंत्यग्निनारायणमथापरे ॥ इंद्रमेकेपरेप्राणंब्रह्माणमपरेजगुः ॥ ब्रह्म
विष्ण्वग्निवरुणाःसर्वेदेवास्तथर्षयः ॥ एकस्यैवाथरुद्रस्यभेदास्तेपरिकीर्तिताइति ॥ स्कांदे ॥ ब्रह्माविष्णुश्चरुद्रश्चपरतत्वविभूतयः ॥ एषांत्रयाणामधिकःशिवः
परमकारणमिति ॥पाद्मे ॥ श्रुतानिसर्वशास्त्राणिपुराणान्यखिलान्यपि ॥ धर्मशास्त्राणिसर्वज्ञत्वत्तःसूतमहामते ॥ अस्माकंसंशयःकश्चित्सुमहान्हृदिवर्तते॥
येनार्ताइवसंजाताश्छेत्तुंतंचत्वमर्हसि॥कोदेवःपरमोज्यायान्कथंचाराध्यतेहिसः॥ आराधितेफलंकिंस्यादेतत्सत्यंब्रवीहिनइतिऋषीणांप्रश्नमुपन्यस्य अत्रवः
कथयिष्यामिइतिहासंपुरातनं ॥ विष्णोःसनत्कुमारस्यसंवादंपापनाशनम् ॥ इममेवपुराप्रश्नंपृष्टवान्विष्णुमव्ययं ॥ सनत्कुमारोभगवान्परापरविभागवान् ॥
मुनेस्तस्यवचःश्रुत्वाविष्णुःसर्वविदांवरः ॥ यदुवाचमहाभागतच्छृणुध्वमतंद्रिताइतिसूतस्यप्रतिवचनंचोपक्षिप्य एकएवशिवोज्यायान्द्विधाचबहुधाश्रुतः ॥
वेदेषुचपुराणेषुसांगोपांगेषुगीयतेइत्यादिविष्णुवचनम् ॥ ब्रह्मांडपुराणेपि पुरापितामहंदेवंमेरुपृष्ठेमहर्षयः ॥ प्रोचुःप्रणम्यदेवेशंकिमेकंतत्वमव्ययमितिप्रश्नेनो
पक्रम्य समाययामहेशस्यमोहितोलोकसंभवः ॥ अविज्ञायपरंभावंस्वात्मानंप्राहचर्विणामित्यादिनाब्रह्मणःस्वपरभावोपदेशांतमाकर्ण्यासहमानस्यनाराय
णस्यपराभवप्रतिपादनंचावतार्य एवंविवदतोर्मोहात्परस्परजयैषिणोः ॥ आजग्मुस्तत्रतेदेवावेदाश्चत्वारएवहि ॥ अन्वीक्ष्यदेवंब्रह्माणंनारायणमवस्थितम् ॥
प्रोचुःसंविग्नहृदयायाथात्म्यंपरमेष्ठिनः ॥ ऋग्वेदः ॥ यस्यांतःस्थानिभूतानियस्मात्सर्वंप्रवर्तते ॥ यदाहुस्तत्परंतत्वंसदेवःस्यान्महेश्वरः ॥ यजुर्वेदः ॥ योयज्ञैर
खिलैरीशोयोगेनचसमर्च्यते ॥ यमाहुरीश्वरंदेवंसएवस्यात्पिनाकधृक् ॥ सामवेदः ॥ येनेदंभ्राम्यतेचक्रंयदाकाशांतरंमहत् ॥ योगिभिर्विद्यतेतत्वंमहादेवःसशं
करः ॥ अथर्ववेदः ॥ यंप्रपश्यंतिदेवेशंयतंतोयतयःपरम् ॥ महेशंपुरुषंरुद्रंसदेवोभगवान्भवः ॥ एवंसभगवान्ब्रह्मावेदानामीरितंशुभम् ॥ श्रुत्वाविहस्यवि
श्वात्मायज्ञश्चापिविमोहितः ॥ कथंतत्परमंब्रह्मसर्वसंगविवर्जितम् ॥ रमतेभार्ययासार्धंप्रमथैश्चातिगर्वितैः ॥इतीरितेथभगवान्प्रणवात्मासनातनः ॥ अमूर्तोमू
र्तिमान्भूत्वावचःप्राहपितामहम् ॥ नह्येषभगवान्पत्न्यास्वात्मनोव्यतिरिक्तया ॥ कदाचिद्रमतेरुद्रस्तादृशोपिमहेश्वरः ॥ अयंसभगवानीशःस्वयंज्योतिःस ॥४५॥
नातनः ॥ स्वानंदभूताकथितादेवीनागंतुकाशिवेति ॥ विष्णुपुराणे ॥ धिक्तेषांधिक्तेषांधिक्तेषांजन्मधिक्तेषां ॥ येषांनवसतिहृदयेकुमतिर्यथाविमोचको
रुद्रइति ॥ नागरखंडे माभूत्तत्रकुलेजन्मशंभुर्यत्रनदैवतमिति ॥ पराशरस्मृतौ ॥ अंतरिच्छंतियेरुद्रंसदावेद्यंमनीषया ॥ गृण्हंतिजिह्वयातेहिरसपूर्णामृतोदकं॥

अंतर्नैच्छंतियेरुद्रंभवानीसहितंभवं॥पुरीषमेवगृण्हंतिजिह्वयातेनसंशयइति॥बह्वृचश्रुतिरपि॥ अंतरिच्छंतितंजनेरुद्रंपरोमनीषया ॥गृभ्णंतिजिह्वयाससमिति॥
पुरुषसूक्तमपिशिवपरमेव ॥ उतामृतत्वस्येशानइतीशानपदस्यरूढ्याशिवएवपर्यवसानात् ॥ नन्वस्यसामवेदब्राह्मणेइदंविवक्षस्यकृष्णइत्यादिनावैष्णव्यांसं
हितायामुपदेशात् ॥ अथर्वणोष्टादशमहाशांतिप्रकरणेतत्तच्छांतिषुतत्तद्दैवत्यमंत्रविनियोगावसरेवैष्णव्यंपुरुषसूक्तमितिविधानात्॥ शौनकबौधायनादिस्मृ
तिषुविष्णुपूजाध्यानहोमादिषुविनियोगाच्चविष्णुपरत्वमेवतस्यप्रतीयतइतिचेन्न ॥ बौधायनसूत्रेशिवसंकल्पादिभिःसहश्रीरुद्रांगन्यासमंत्रेषूपदेशात् ॥ छंदो
गानांकेषांचिद्वाजसनेयिनांचमहारुद्रजपमध्येनिवेशात् ॥ नमकंचमकंचैवपुरुषसूक्तंचनित्यशः ॥ जपन्नेतिमहादेवंगृहंगृहपतिर्यथेतिपुराणेष्वपिश्रवणाद्वा
स्तुशांतिमध्येवास्तकुंभेदेवंरुद्रंभुवननायकमित्युपक्रम्य नमकंचमकंचैवपुरुषसूक्तमेवचेत्यादिनाजपेविनियोगाच्च॥लैंगादित्यादिपुराणेषु सुकूर्चेनसुपुष्पेणस्ना
पयेन्मंत्रपूर्वकं॥ मंत्रांश्चतेप्रवक्ष्यामिशृणुसर्वार्थसिद्धयेइत्युपक्रम्यज्येष्ठसाम्नात्रयेणैवतथादेवव्रतैरपि॥ रथंतरेणपुण्येनसूक्तेनपुरुषेणचेतिशिवाभिषेकमंत्रेषुप
रिगणनाच्च ॥ मनुरपिधर्मशास्त्रोपसंहारे ॥ प्रशासितारंसर्वेषामणीयांसमणोरपि ॥ रुक्माभंस्वप्नधीगम्यंविद्यात्तुपुरुषंपरमितिसर्वांतर्यामित्वगुणकंपरमात्मान
मुद्दिश्य एनमेकेवदंत्यग्निमरुतोन्येप्रजापतिं॥इंद्रमेकेपरेप्राणमपरेब्रह्मशाश्वतमितिसर्ववैदिकव्यवहारबाहुल्यंप्रदर्श्य एषसर्वाणिभूतानिपंचभिर्व्याप्यमूर्तिभिः
जन्मवृद्धिक्षयैर्नित्यंसंसारयतिचक्रवदिति मूर्तिपंचकेनसर्वमूर्तिव्याप्तिलिंगप्रदर्शनेनशिवएवपरमात्मेतिस्वमतंस्पष्टीचकार ॥ बौधायनेनापिशिवपूजाविधौ
विष्णोस्तदावरणेनिवेशाद्देवतांतरपूजाविधिषुशिवस्यावरणदेवतास्वसंनिवेशाच्चशिवस्यैवसर्वोत्कर्षःसूचितः ॥ कात्यायनोपि रुद्रोह्येवैतत्सर्वमितितस्यसर्वा
त्मकत्वेनपरंभावंद्योतयामास॥ आश्वलायनोपि यस्मात्परतरंनास्तिनापरंपरमात्मनः॥ नज्यायोस्तिनचाणीयोनमस्तस्मैस्वयंभुवे ॥ येनेदमखिलंपूर्णंयन्मया
मूर्तयःस्मृताः ॥ तस्मैशिवायमहतेनमःसूक्ष्माक्षरात्मनइतिशिवएवसर्वोत्कृष्टइतिस्वमतंद्योतयामास ॥ शास्त्रकारेषुपतंजलिस्तावत् क्लेशकर्मविपाकाशयैरपरा
मृष्टःपुरुषविशेषईश्वरः ॥ तत्रनिरतिशयंसर्वज्ञबीजं ॥ सएषपूर्वेषामपिगुरुः ॥ कालेनानवच्छेदात् ॥ तस्यवाचकःप्रणवः ॥ तज्जपस्तदर्थभावनमिति ॥ पर
विषयाणि ॥ नशिवस्याणवोबंधःकार्मोमायिकएववा ॥ प्राकृतोवाथवाबंधोह्यहंकारात्मकस्तथा ॥ नरागोनचवाद्वेषःशंभोरमिततेजसः ॥ नचाप्यभि
निवेशोस्यकुशलाकुशलान्यपि ॥ सपुंविशेषःपरमोभगवानंतकांतकः ॥ लोकेसातिशयत्वेनज्ञानैश्वर्येविलोकिते ॥ शिवेनातिशयत्वेनस्थितेप्राहुर्मनीषि
णइति प्रतिसर्गप्रसूतानांब्रह्मणांशास्त्रविस्तरम् ॥ उपदेष्टासएवादौकालावच्छेदवर्तिनाम् ॥ कालावच्छेदयुक्तानांगुरूणामप्यसौगुरुः ॥ सर्वेषामेवसर्वेशः
कालावच्छेदवर्जितः ॥ प्रणवोवाचकस्तस्यशिवस्यपरमात्मनः ॥ शिवरुद्रादिशब्दानांप्रणवोहिपरःस्मृतः ॥ शंभोःप्रणववाच्यस्यभावनात्तज्जपादपि ॥
यासिद्धिःसापराप्राप्याभवत्येवनसंशयइत्यादिवायुसंहितोत्तरभागसप्तमाध्यायपठितवचनसमानार्थानिसूत्राणिनिबध्नन्शिवस्यैवपरभावंप्रतिपादयामास ॥
तदैकार्थ्यादिवसूत्राणांतन्मूलकत्वमवधार्यतत्वकौमुदीकारःसूत्राणांशिवविषयत्वमेवस्पष्टीचकार ॥ ननुपूर्वमीमांसानुयायिनश्चोदनालक्षणधर्मस्यैवफलप्र

प्रदत्वंमन्यंते ॥ औपनिषदास्त्वीश्वरस्येति कथमेतन्मतयोर्विरोधस्यपरिहारइतिचेदुच्यते ॥ एतदुत्तरमीमांसायांतृतीयेध्यायेनिरूपितं ॥ किंधर्मःफलंददाति॥
आहोस्विदीश्वरइतिसंशये ॥ तत्रकेचिद्धर्मएवफलप्रदोनेश्वरइतिवदंति ॥ परंतुसपूर्वपक्षः ॥ सिद्धांतस्तुकिंधर्मोज्ञानाधिष्ठितएवफलप्रदःकिंवाकेनचिच्चेतने
नाधिष्ठितः ॥ नाद्यः ॥ अचेतनस्यतारतम्यानभिज्ञस्ययथोचितफलदातृत्वायोगात् ॥ द्वितीयेतुयेनाधिष्ठितःसएवफलप्रदोस्तु ॥ नचैवंधर्मवैयर्थ्यापत्तिरिति
शंकनीयं ॥ वैषम्यनैर्घृण्यपरिहारायधर्माधर्माक्षेपणात् ॥असतितुधर्मादौकेषांचिदुत्तमंकेषांचिन्मध्यमंकेषांचिच्चाधमंसुखंकुर्वन्नीश्वरःकथंविषमोनभवेत्॥
कथंवाविचित्रंदुःखंप्रापयतीतिनिर्घृणोनभवेत् ॥ धर्माधर्मानुसारेणतत्प्रापणेगुरुपितृराजादीनामिवनवैषम्यनैर्घृण्येप्रामुतः ॥नहिदुष्टशिक्षांशिष्टपरिपालनंच
कुर्वतांगुर्वादीनांविषम्यनैर्घृण्येविद्येते ॥ उक्तंचपातंजलमहाभाष्ये ॥ साम्रृतैःपाणिभिर्घ्नंतिगुरवोनविषोक्षितैः ॥ लालनाश्रयिणोदोषास्ताडनाश्रयिणोगुणा
इति ॥ तस्मादिंद्रादिदेवतांतर्यामीपरमेश्वरएवप्राणिकर्मानुसारेणफलप्रदोविवक्षितः ॥ अंतःप्रविष्टःशास्ताजनानांसर्वात्मेत्यादिश्रुतेः॥ अतःकर्मानुसारेणेश्व
रप्रसादएवफलद्वारमिति नजैमिनीयशिवस्वामिकमतयोर्विरोधः विवक्षाविशेषेणतत्समाधानात्॥ यथादेवदत्तस्यैवपक्तृत्वेपिसम्यगभिज्वलनंविवक्षित्वाध
र्मःफलप्रदइतिव्यवहारःकिंनस्यात्तस्मादविरोधात्फलप्रदोजगदीश्वरःशिवएवसर्वैःपूजनीयइत्यलमतिप्रसंगेनेति ॥ पाद्मेगीतामाहात्म्ये ॥ ईश्वरउवाच ॥ क
दाचिदासनेगम्येसुखासीनंमुरद्विषं ॥ आनंदयित्रीलोकानांलक्ष्मीःपप्रच्छसादरं ॥ श्रीरुवाच ॥ शयालुरसिदुग्धाब्धौभगवन्केनहेतुना ॥ उदासीनइवैश्वर्येज
गतिस्थापयन्नपि॥ ईश्वरउवाच॥ इतिदेव्यावचःश्रुत्वामुरभिन्नामगर्जितं ॥ उवाचश्लक्ष्णयावाचाविस्मयस्मेरलोचनः श्रीभगवानुवाच॥नाहंसुमुखिनिद्रालु
र्निजमाहेश्वरंमहः ॥ दृशातत्वानुवर्तिन्यापश्याम्यंतर्निमग्नया ॥ कुशाग्रयाधियादेवियदंतर्योगिनोहृदि ॥ पश्यंतियच्चवेदानांसारंमीमांस्यतेभृशं ॥ तदेकम
क्षरंज्योतिरात्मरूपमनामयं ॥ अखंडानंदसंदोहनिष्पंदंद्वैतवर्जितं ॥ यदाश्रयाजगद्वृत्तिर्यन्मयाचानुभूयते ॥ नयेनरहितंकिंचिज्जगदेतच्चराचरं ॥ निर्मथ्यवक्त्र
धालेभेवेदशास्त्रांबुधींसुधीः ॥ द्वैपायनोयदासाद्यगीताशास्त्रंनिसृष्टवान् ॥ निद्रालुरितिदेवेशिदुग्धाब्धौप्रतिभासिते ॥ ईश्वरउवाच ॥ इतितस्यमुरारातेर्निर्भरा
नंदनंवचः ॥ प्रहर्षोत्फुल्ललोलाक्षीश्रुत्वालक्ष्मीर्विसिस्मिये ॥ श्रीरुवाच ॥ भवानेवहृषीकेशध्येयोसियतिनांसदा ॥ तस्मात्त्वत्तःपरंत्वन्यदितिकौतूहलंहिमे॥
चराचराणांलोकानांकर्ताहर्तास्वयंप्रभुः ॥ यथास्थितस्ततोन्यस्त्वंयदिमांबोधयाच्युत ॥ श्रीभगवानुवाच ॥ मायामयमिदंदेविवपुर्मेनतुतात्विकं ॥ सृष्टिस्थि
त्युपसंहारक्रियाजालोपबृंहितं ॥ अतोन्यदात्मनोरूपंद्वैताद्वैतविवर्जितं ॥ भावाभावविनिर्मुक्तमाद्यंतरहितंप्रिये ॥ शुद्धसंवित्प्रभाभासंपरानंदैकमंदिरं ॥ रू
पमैश्वर्यमात्मैकगम्यंगीतासुकीर्तितं ॥ इत्याकर्ण्यवचोदेवीदेवस्यामिततेजसः ॥ शंकमानाहवाक्येषुपरस्परविरोधितां ॥ स्वयंचेत्परमानंदमवाङ्मनसगोच
रं॥बोधयंतिकथंगीताइतिमेछिंधिसंशयं॥ईश्वरउवाच ॥ तच्छ्रुत्वाचवचोयुक्तमितिहासपुरःसरं ॥आत्मानुगामिनींगीतांस्वयंबोधितवान्प्रभुः ॥अहमात्मापरे
शोपिपरापरविभेदतः ॥ द्विधाततःपरःसाक्षीनिर्गुणोनिष्कलःशिवः ॥ अपरःपंचवक्त्रोहंद्विधातस्यापिसंस्थितिः ॥ शब्दार्थभेदतोवाच्योयथात्मानंमहेश्वरः॥

इतितस्यवचःश्रुत्वागीतात्राक्यमहोदधेः ॥ गीतायावाक्यरूपेण योऽशिवश्छिद्यतेदृढम् ॥ मदीयःपाशबंधोयंसंसारोविषयात्मकः ॥ यदभ्यासवशादीशः
पंचवक्त्रोमहेश्वरः ॥ इदंपरविभेदेनबुध्यतेभवभीरुभिः ॥ तमपृच्छदिदंवाक्यमंगप्रत्यंगसंस्थितम् ॥ माहात्म्यमितिहासंचसर्वंतस्यैन्यवेदयत् ॥ शृणुसुश्रोणि
वक्ष्यामिगीतासंस्थितिमात्मनः ॥ वक्त्राणिपंचजानीहिपंचाध्यायाननुक्रमात् ॥ दशाध्यायाभुजाश्चैकमुदरंद्वेपदांबुजे ॥ एवमष्टादशाध्यायीवाङ्मयीमूर्तिरै
श्वरी ॥ जानीहिज्ञानमात्रेणमहापातकनाशिनी इत्यादिनागीतामाहेश्वरीमूर्तिरित्युक्तम् ॥ अतएवभगवतावासुदेवेनाप्यर्जुनंप्रति ईश्वरःसर्वभूतानांहृद्देशेर्जुन
तिष्ठति ॥ भ्रामयन्सर्वभूतानियंत्रारूढानिमायया ॥ तमेवशरणंगच्छसर्वभावेनभारत ॥ तत्प्रसादात्परांशांतिंस्थानंप्राप्स्यतिशाश्वतमित्यादिनेश्वरशब्दवाच्य
स्यशिवस्यैवप्रसादान्निरतिशयशांतिप्राप्तिर्नान्यस्यप्रसादादितिगीताशास्त्रस्यतात्पर्यमितिध्वनितम् ॥ तथानैयायिकादयःस्वाभिमतंपरमात्मानंभवशिवस्थाए
वेश्वरादिशब्दैर्व्यवहरंतःपरमेश्वरस्यशिवस्यैवपरभावंस्वाभिमतंप्रकटयामासुः॥तथारसेश्वरमुनिमतानुसारिणोपि॥कल्पांतरेकदाचित्तुदग्ध्वालोकान्महेश्वरः॥
सहसैवासृजद्विष्णुंब्रह्माणंचनिजेच्छयेत्यादिरसोत्पत्तिप्रकरणादिषुव्यवहरंतिस्म ॥ ब्रह्मसूत्रकृतापिशब्दादेवप्रमितइत्यधिकरणेईशानशब्दस्वरूपयाभिमान
श्रुत्यान्यायांतरनिरपेक्षयांगुष्ठमात्रःपुरुषःपरमात्मानिर्णीतइत्ययमर्थःसर्वेषांसंमतः ॥ यस्यहीशानशब्दोऽभिधानंतस्यपरमात्मभावः सूत्रकारस्यहृदयस्थितो
ऽवसीयते ॥ देवतांतरयोगेनलक्षणयाप्रयोगोपपत्तौप्रमाणाभावात् ॥ रूढिक्लृप्त्यभावेनतदभिधानश्रुतित्वायोगादितिभावः ॥यश्चपुराणादिषुक्वचित्क्वचिद्विष्णो
र्विधातुर्वारुद्रादुत्कर्षस्तस्यचापकर्षःप्रतीयतेसनमउपाधितदवतारभेदविषयः ॥ वैष्णवेषुपुराणेषुयोपकर्षस्तुदृश्यते ॥ रुद्रस्यासौहरस्यास्यविभूतेरेवकेवलं॥
उत्कर्षोयःपुराणेषुदृश्यतेवैष्णवेषुच ॥ असौसत्वात्मनाविष्णोर्नस्वरूपेणसत्तम ॥ सर्वकारणमीशानःसांबःसत्वादिलक्षणः ॥ नविष्णुर्नविरंचिश्चनदेवोनापरःपु
मान् ॥ इत्यादिपराशरपुराणादिवचनश्रवणात् ॥ नचशिवस्यविरंच्यादेरुद्भवादिवचनादपिनिकर्षसूचनंशंकनीयम् ॥ अहंचभवतोवक्त्राकल्पांतेघोररूपधृ
क् ॥ शूलपाणिर्भविष्यामिक्रोधजस्तवपुत्रकः ॥ सृष्ट्यर्थंब्रह्मणःपुत्रोललाटादुत्थितःप्रभुरित्यादिकौर्मराजधर्मादिवचनैस्तस्यलोकानुग्रहार्थमैच्छिकाव
तारोक्तेः ॥ ब्रह्माविष्णुश्चरुद्रश्चश्रीशंभोरखिलेश्वरात् ॥ नभिद्यंतेतदंशत्वादवताराहरेरिव ॥ एवंसत्यवतारस्यकृष्णादेःकीर्तनंयथा ॥ तदीयत्वेनकीर्त्यंतेमहा
विष्णोर्गुणाअपि ॥ एवंशिवस्यकीर्त्यंतेतदंशेष्वेकताधिया ॥ सर्वकर्तृत्वसर्वांतर्यामित्वप्रमुखागुणाइत्यादित्यपुराणाच्च ॥ स्कांदेशंकरसंहितायाम् ॥ यथावा
देषुशास्त्रेषुविश्वाधिकउमापतिः ॥ पुरुषःपरमःसाक्षात्पतिःपाशविमोचकः॥ परंब्रह्मपरंधामपरंज्योतिरनाकुलः ॥ मंगलंमंगलानांचपावनानांचपावनम् ॥सर्व
मंगलकोपेतमुतवभुःसुमंगलः ॥ आगमाअपियंनित्यमम्तंप्रवदंतिहि ॥ तद्वदेवपुराणेषुशैवंसांबंसदाशिवम् ॥ स्वतंत्रमेकमद्वैतंप्रवदंतिनिरंकुशम् ॥ ब्राह्मंपाद्मं
वैष्णवंचशैवंभागवतंतथा॥भविष्यंनारदीयंचमार्कंडेयमतःपरम् ॥ आग्नेयंब्रह्मवैवर्तंलैंगंवाराहमेवच ॥ स्कांदंचवामनंचैवमात्स्यंकौर्मंचगारुडम् ॥ ब्रह्मांडंचे
तिपुण्योयंपुराणानामनुक्रमः ॥ तत्रशैवानिशैवंचभविष्यंचद्विजोत्तमाः ॥ मार्कंडेयंतथालैंगंवाराहंस्कांदमेवच ॥ मात्स्यमन्यत्तथाकौर्मंवामनंचमुनी

श्वराः ॥ ब्रह्मांडंचदशेमानित्रीणिलक्षाणिसंख्यया ॥ मंथानांमहिमासर्वैःशिवस्यैवप्रकाश्यते ॥ असाधारणयामूर्त्यानाम्नासाधारणेनच॥वदंतिशिवमेतानि शिवस्तेषुप्रकाश्यते ॥ विष्णोर्हिवैष्णवंतद्वत्तथाभागवतंशुभम् ॥ नारदीयपुराणंचगारुडंवैष्णवंविदुः ॥ ब्राह्मंपाद्मंब्रह्मणोद्वेअग्नेराग्नेयमेककम् ॥ सावित्रंब्रह्मवैवर्तमेवमष्टादशंस्मृतम् ॥ दशशैवपुराणानिसात्विकानिविदुर्बुधाः ॥ श्रद्धेयानिद्विजवरैस्तेषुधर्मस्तुसात्विकः ॥ वैष्णवानिचचत्वारितामसानिमुनीश्वराः ॥ क्षत्रियाणांश्रौतधर्मास्तेषुतद्देवताहरिः ॥ ब्राह्मेतुराजसेवैश्यसेव्येसर्वत्रसंमते ॥ तस्माच्छैवानिविप्राणांपुराणानिहितानिहि ॥ तस्मादेषुचसर्वात्मासांबःसर्वोत्तमोत्तमः ॥ पूज्यःसर्वामरान्हित्वावैकुंठप्रमुखानपि ॥ इत्युक्तंशौनकादिभ्यःसत्यंसत्यात्मजेनहि ॥ एवमेवपुराकेचिदृषयःप्राप्तसंशयाः ॥ मेरौगत्वाविधातारंदृष्ट्वातत्रप्रजापतिं ॥ स्तुत्वातेविविधैःस्तोत्रैःपप्रच्छुर्विनयान्विताः ॥ ब्रूह्येषांभगवन्धातःसंशयाविष्टचेतसाम् ॥ परंब्रह्मपरंज्योतिःकोवादेवोभवेदिति ॥ तेषांतद्वचनंश्रुत्वाब्रह्माध्यात्वाक्षणंतदा ॥ हृत्पुंडरीकमध्यस्थंनीलग्रीवंत्रिलोचनम् ॥ चंद्रार्धभूषणंसौम्यंसच्चिदानंदविग्रहम् ॥ कृष्णापिंगलमीशानमृतंसत्यंपरात्परम् ॥ आनंदाश्रुकणान्सिंचन्हर्षगद्गदयागिरा ॥ ईशानःसर्वविद्यानामीश्वरोजगतांप्रभुः ॥ ब्रह्मणोधिपतिःशंभुर्विष्णोरधिपतिःस्वराट् ॥ सदाशिवःपरंज्योतिरोंकारनिलयोमहान् ॥ सएवशंकरःशंभुःपरब्रह्मनचेतरः ॥ सत्यंसत्यंपुनःसत्यमुद्धृत्यकरमुच्यते ॥ तस्मात्सएवसर्वेशःशतवारंमयोच्यते ॥ तत्समोनास्तिलोकेषुनपरोनापरःक्वचित् ॥ सर्वज्यायानणीयांश्वस्तब्धोवृक्षइवेश्वरः ॥ दिवितिष्ठनिसर्वात्मातेनपूर्णमिदंजगत् ॥ यस्माद्वाचोनिवर्त्तंतेअप्राप्यमनसासह ॥ आनंदमस्ययोवेत्तिनभयंतस्यकुत्रचित् ॥अद्यापिब्रह्मविष्णुभ्यांनदृष्टोयंमहेश्वरः॥पशूनांपतिरीशोयंब्रह्माद्याःपशवःस्मृताः ॥ बहुनाकिंपरंब्रह्मसएवऋषिसत्तमाः ॥इतिधातृवचःश्रुत्वातेसर्वेऋषिसत्तमाः॥त्यक्तमोहामहादेवंपरंब्रह्मसनातनं ॥ ज्ञात्वाप्रणम्यधातारंस्तुत्वाचविविधैःस्तवैः ॥ धृतत्रिपुंड्ररुद्राक्षमालाभरणभूषिताः ॥ कैवल्यमाययुःसर्वेशिवभक्त्याप्रजापते ॥ निश्चितंब्रह्मणापूर्वमेवमेवानुसारतः ॥ इतिवेदांतवाक्यानांनिष्ठाकाष्ठामहेश्वरइति ॥ आगमेष्वपिबहुषुशिवस्यैवोत्कर्षःप्रतीयते ॥ यत्तुकौर्मउपरिभागेपंचदशाऽध्याये पाखंडिनोविकर्मस्थान्धर्माचार्यांस्तथैवच ॥ पांचरात्रान्पाशुपतान्वाङ्मात्रेणापिनार्चयेत् ॥ तत्रैवैकोनविंशाध्याये बौद्धश्रामणिकग्रंथाःपंचरात्रविदोजनाः ॥ कापालिकाःपाशुपताःपाखंडायेचतद्विधाः ॥ मनुरपि पाखंडिनोविकर्मस्थान्बैडालव्रतिकाञ्छठान् ॥ हैतुकान्बकवृत्तींश्चवाङ्मात्रेणापिनार्चयेदिति ॥ पाराशरपुराणेदशमाध्याये अथातःसंप्रवक्ष्यामिज्ञानानुत्पत्तिकारणमित्युपक्रम्य वेदांगानांचविद्वेषःस्मृतीनांचतथैवच ॥ पुराणानांचविद्वेषोभारतस्यतथैवच ॥ तेषांमध्येनृविद्वेषस्तेषांबाधश्चकशव ॥ तेषामर्थापहारश्चज्ञानानुत्पत्तिकारणं ॥ वामपाशुपतादीनामश्रौतानांपरिग्रहः ॥ पांचरात्रादयश्चापिज्ञानानुत्पत्तिकारणमित्युक्तं ॥ तस्मात्कौर्मवासिष्ठलैंगपाराशरपुराणादीनांपूर्वमीमांसायाहेमाद्रिमाधवादिनिबंधानांचपर्यालोचनयापाशुपतादीनामप्रामाण्यमेवलक्ष्यतइतितत्त्ववैदिकांशेअप्रामाण्यंनवैदिकांशे ॥ उक्तंचसूतसंहितायांमुक्तिखंडेचतुर्थाध्याये ॥ तथापियोंऽशोमार्गाणांवेदेननविरुध्यते ॥ सोंऽशःप्रमाणमित्युक्तंकेषांचिदधिकारिणामिति ॥ यज्ञवैभवखंडेद्वाविंशेऽध्याये ॥ सूतउवाच ॥ वेदांगान्यु

पवेदांश्चकामिकाद्यागमानपि ॥ कापालंनाकुलंचैवतयोर्भेदान्द्विजर्षभाः ॥ तथापाशुपतंसोमभैरवप्रमुखागमान् ॥ तेषामेवोपभेदांश्चशतशोथसहस्रशः ॥वि
ष्णवागमांस्तथाब्राह्मान्बुद्धार्हाद्यागमानपि ॥ लोकायततर्कशास्त्रंबहुविस्तारसंयुतम् ॥ मीमांसामतिगंभीरांसांख्ययोगौतथैवच ॥ निर्ममेशंकरःसाक्षात्सर्वज्ञः
स्वयमेवच ॥ अधिकारविभेदेनएकस्यैवसदाद्विजाः ॥ तर्कैरेतेहिमार्गास्तुनहंतव्यामनीषिभिरित्युक्तम् ॥ अतएवमानवपुराणेआगमानुपक्रम्य अधिकारिवि
शेषेणप्रवृत्तानहिसंशयइत्युक्तं ॥ अतएवपार्थसारथिमिश्रैरपि ॥ यावदेकंश्रुतौकर्मस्मृतौचान्यत्प्रतीयते॥ तावत्तयोर्विरुद्धत्वेश्रौतानुष्ठानमिष्यतइतिषार्तिक
मुदाहृत्यतेनफलतोप्रामाण्यंश्रुतिविरुद्धानाम् ॥श्रुत्यादीनामित्युपसंहारभाष्यमप्यननुष्ठानरूपाप्रामाण्यपरंव्याख्येयमित्युक्तम् ॥ अतएवोत्तरतंत्रेआगमाना
मविरुद्धेंशेप्रामाण्यंस्वीकृतंभट्टैः ॥ एवंचयानिपाशुपतागमनिंदावचनानितान्यश्रौतपाशुपतागमविषयाणि ॥ तदुक्तंवायुसंहितायां ॥ शैवागमोपिद्विविधः
श्रौतोश्रौतश्चसंस्मृतः ॥ श्रुतिसारमयःश्रौतःस्वतंत्रइतरोमतः ॥ स्वतंत्रोदशधापूर्वमित्यारभ्य श्रुतिसारमयोन्यस्तुशतकोटिप्रविस्तरः ॥ परंपाशुपतंयत्रव्रतंज्ञा
नंचकथ्यतइत्यनेनश्रौताश्रौतविभागस्यस्फुटंप्रतिपादनात् ॥ श्रौतपाशुपतस्याथर्वशिरःकालाग्निरुद्रोपनिषदाद्युपदिष्टपाशुपतशांभवादिसंज्ञितपरमवैदिक
व्रतप्रपंचेनतस्यवैदिकमार्गाद्भिन्नमतत्वाभावात् ॥ एषपाशुपतोयोगःसेवनीयोमुमुक्षुभिः ॥ भस्मच्छन्नैर्हिसततंनिष्कामैरितिहिश्रुतिरित्यादित्यपुराणाच्च ॥
अश्रौतागमानामपिसर्वांशेनाप्रामाण्यंकिंतुवैदिकमार्गविरुद्धेवामाचारतप्तमुद्रांकनाद्यनुष्ठेयांशे ॥ ब्रह्मविष्णुमहादेवप्रमुखैःपरिकीर्तिताः ॥ आगमाश्चानयाने
यादिशानैवान्ययाबुधाः ॥ अन्यथातेतुनेयाश्चेद्विरुद्धाःस्युर्नसंशयइत्यादिवामनपुराणोक्तरीत्याश्रुत्यविरुद्धागमानामेवप्रामाण्याभ्युपगमात् ॥ अन्यानि
चैवशास्त्राणिलोकेस्मिन्मोहनायवै ॥ वेदवादविरुद्धानिमयैवकथितानित्वितिकौर्माद्युक्तरीत्यातामसजनव्यामोहार्थप्रलंभमूलकत्वस्यवाकल्पनयासर्वथा
अप्रामाण्यवादः ॥ प्रायेणप्रामाण्यव्यवस्थापनसंभवेमहापुरुषप्रणीतानांतेषांसर्वथैवाप्रामाण्यकल्पनायोगात् ॥ भागवतेअक्रूरस्तोत्रे त्रय्याचविद्ययाकेचि
दित्युपक्रम्यत्वामेवान्येशिवोक्तेनमार्गेणशिवरूपिणम् ॥ बह्वाचार्यविभेदेनभगवन्समुपासतइत्यादिनातेषामधिकारिविभेदेनप्रामाण्यविभावनाच्च ॥ स्व
तंत्रागमोदितेष्वाचारेषुकेधिक्रियंतइतिचेत् ॥ उच्यते ॥ शापाद्वागौतमादीनांपापाद्वामहतोनराः ॥ येगतावेदबाह्यत्वंयेचसंकीर्णयोनिजाः ॥ तेधिक्रियंतेतं
त्रेषुस्त्रीशूद्राश्चयथायथम् ॥ अनुग्रहार्थमेतेषामागमानिर्मिताःपुरा ॥ तस्माद्वैवेदबाह्यानांरक्षणार्थंचप्राणिनाम् ॥ विमोहनायशास्त्राणिकरिष्यावोवृषध्व
ज ॥ एवंसंचोदितोरुद्रोमाधवेनमुरारिणा ॥ चकारमोहशास्त्राणिकेशवोपिशिवेरितइत्यादिना तेषांकथंचिद्रतिप्राप्तयेताभ्याम‌वैदिकपाशुपतपंचरात्रादयः
प्रणीताइतिवर्णनेनवैदिकमार्गबहिर्भूतानांतत्राधिकारःप्रदर्शितइत्यलमतिप्रसंगेन ॥ विस्तरस्तुशैवागमादिषुलिंगार्चनचंद्रिकादिनिबंधेषुचद्रष्टव्यः ॥ एवंश्रु
तिस्मृतिपुराणमहाभारतरामायणानेकऋषिशास्त्रकारसंमत्याभगवान्शिवएवसर्वोत्तरइतिमनसिनिधायोक्तंएतदेवपरंमत्वानमंतिचभजंतिचेति ॥ १५५ ॥

अत्रइहलोके ॥ अंतइति ॥ अंतेप्रयाणकालेपरांशिवैकविषयां ॥ ५६ ॥ यस्यचभजमानस्यापिबलवत्तरप्रारब्धकर्मवशेनमुक्तेर्विलंबोभवेत्तस्यापिजन्मां
तरेवश्यभाविन्याभक्त्यैवमुक्तिर्भवेदेवेत्यभिप्रेत्याह ॥ शिवेभक्तिरिति॥ भवेभवेजन्मनिजन्मनीत्यर्थः ॥ सूचितंचैतद्भगवद्गीतायां ॥ अयतिःश्रद्धयोपेतोयोगा
च्चलितमानसः ॥ अप्राप्ययोगसंसिद्धिंकांगतिंकृष्णगच्छतीत्यादिनार्जुनेनपृष्टे श्रीभगवानुवाच ॥ पार्थनैवेहनामुत्रविनाशस्तस्यविद्यते ॥ नहिकल्याणकृत्क
श्चिद्दुर्गतिंतातगच्छति ॥ प्राप्यपुण्यकृतांलोकानुषित्वाशाश्वतीःसमाः ॥ शुचीनांश्रीमतांगेहेयोगभ्रष्टोभिजायते ॥ अथवायोगिनामेवकुलेभवतिधीमतां ॥
एतद्धिदुर्लभतरंलोकेजन्मयदीदृशं ॥ तत्रतंबुद्धिसंयोगंलभतेपौर्वदेहिकं ॥ यततेचततोभूयःसंसिद्धौकुरुनंदन ॥ पूर्वाभ्यासेनतेनैवह्रियतेह्यवशोपिसः ॥ जि
ज्ञासुरपियोगस्यशब्दब्रह्मातिवर्तते ॥ प्रयत्नाद्यतमानस्तुयोगीसंशुद्धकिल्बिषः ॥ अनेकजन्मसंसिद्धस्ततोयातिपरांगतिमिति ॥ पद्मपुराणेशिवगीतासु ॥ को
टिजन्मार्जितैःपुण्यैःशिवेभक्तिःप्रजायते ॥ इष्टापूर्तानिकर्माणितेनाचरतिमानवः ॥ शिवार्पणधियाकामान्परित्यज्ययथाविधि ॥ अनुग्रहात्तेनशंभोर्जाय

एवंयःशृणुयादत्रसर्वान्कामानवाप्नुयात् ॥ अंतेभक्तिंपरांप्राप्यमुक्तिंवैप्राप्नुयात्पुनः ॥ १५६॥ शिवेभक्तिःशिवेभक्तिः
शिवेभक्तिर्भवेभवे॥ १५७॥इतिश्रीशिवमहापुराणेकैलाससंहितायांउपरिभागेद्वादशोऽध्यायः॥ १२ ॥

तेसुदृढोनरः ॥ ततोभीताःपलायंतेविघ्नंहित्वासुरेश्वराः ॥ जायतेतेनशुश्रूषाचरितेचंद्रमौलिनः ॥ शृण्वतोजायतेज्ञानंज्ञानादेवविमुच्यते ॥ बहुनात्रकिमुक्तेनय
स्यभक्तिःशिवेदृढा ॥ महापापाद्यपापौघकोटिग्रस्तोपिमुच्यतइति ॥ तस्मादैहिकामुष्मिकसुकृतफलेच्छुभिःसकामैःसंसारदुःखानुभवजनितवैराग्यैर्निष्कामै
रपिजनैःत्वमेकोलोकानामधिपतिरुमानाथजगतांशरण्यःप्राप्यस्त्वंजलनिधिरिवानंदपयसां ॥ त्वदन्योनिर्वाणंनवितरतिनिर्वाणपतिरप्यतःसर्वोत्कृष्टस्त्वमसि
हिनमोनीप्यशिवते ॥१॥ मयाविज्ञायेशानिशमपिकृतायेतुमनसासकामेनामेयाःसततमपराधाबहुविधाः॥तएवक्षंतव्याःक्वचिदपिशरीरेणवचसाकृतावैतेनूनं
शिवशिवकृपासागरविभो ॥ २ ॥ प्रमादाद्येकेचिद्वितनमपराधाविधिहताःकृताःसर्वेतेपिप्रशममुपयांतुस्फुटतरं ॥ शिवश्रीमन्शंभोशिवशिवमहेशेतिचजपन्
क्वचिल्लिंगागारेशिवहरवसामिस्थिरतरमितिशिवरहस्याद्युक्तरीत्याभगवान्विश्वेश्वरःसांबःशिवएवसेव्यस्तत्प्रसादादेवसर्वपुरुषार्थलाभोभवतीतिबोध्यमिति
शिवम् ॥ ५७ ॥ इतिश्रीशिवमहापुराणेकैलाससंहिताटीकायांसारबोधिन्यामुत्तरभागेद्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ श्रीकाशीविश्वेश्व
रार्पणमस्तु ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥